# सप्तशतीविषयानुक्रमः ।

॥ अनुक्रमणिका समाप्ता ॥

श्रीगणेशायनमः ॥ गजवदनंशिखिवाहंश्रीदु
र्गांसद्गुरुंचनिजपितरौ ॥ नत्वासप्तशतीयांकुर्वे
ऽनुष्ठानपद्धतिंसुलभाम् ॥ १ ॥ सामंतवाटिका
पुरवासिश्रीकृष्णशर्मणाक्रियते ॥ पद्धतिरियं
यथामतिविचार्यदुर्गामहोदधिग्रंथम् ॥ २ ॥
श्रीदुर्गाप्रीत्यर्थंपरोपकृतयेचपद्धतिंकुर्वे ॥ अ
स्यामधिकंन्यूनंसंतःसंशोधयंतुवैदयया ॥ ३ ॥
स.१ ॥ सप्तशतीविधिः ॥ ॥ अथसाधकःकृतमं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० गलस्नानतिलकनित्यविधिःप्राङ्मुखः आदा वि०
२ वाचामेत् यथा ॐ ऐं आत्मतत्त्वंशोधयामि
नमःस्वाहा ॐ ह्रींविद्यातत्त्वंशोधयामिनमः
स्वाहा ॐ क्लींशिवतत्त्वंशोधयामिनमःस्वाहा
ॐ ऐंह्रींक्लींसर्वतत्त्वंशोधयामिनमःस्वाहा ॥ त
तःपवित्रपाणिःप्राणायामंकुर्यात् यथामूलमं
त्रेणेडया ( वामनासया ) वायुमापूर्य कुंभके १
चतुर्वारंमूलंपठित्वाद्विवारंमूलमुच्चरन् पिंगल

या ( दक्षनासया ) रेचयेत् इति ॥ ततःश्री
गणेशगुर्वादीन्नत्वा सुमुखश्चेत्यादिदेशकालसं
कीर्तनांते नित्यपाठसंकल्पोयथा अस्माकंसर्वे
षांसकुटुंबानांक्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्य
र्थं समस्तमंगलावाप्त्यर्थं अमुकगोत्रोत्पन्नस्या
मुकनाम्नोमम श्रीजगदंबाप्रसादेनसर्वापन्निवृ
त्तिसर्वाभीष्टफलावाप्तिधर्मार्थकाममोक्षचतु
र्विधपुरुषार्थसिद्धिद्वारा श्रीमहाकालीमहाल

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





क्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं कवचार्गला
कीलकपठनैकादशन्यासपूर्वकनवार्णमंत्राष्टो
त्तरशतजपरात्रिसूक्तपठनपूर्वकं देवीसूक्तपठ
ननवार्णमंत्राष्टोत्तरशतजपरहस्यत्रयपठनांतं
श्रीचंडीसप्तशत्याःपाठंकरिष्ये ॥ विशेषकामना
यांतत्तदूहःकार्यः ॥ सपल्लवादिशतचंडीचिकी
र्षायां देशकालसंकीर्तनांतेअमुकगोत्रोत्पन्नस्य २
अमुकनाम्नोममामुकव्याधिनाशपूर्वकं क्षिप्रा

रोग्यावाप्तिद्वारा श्रीमहाकाली० ३ दुर्गाप्रीत्य
र्थंइत्यादि० अथवा अपमृत्युपरिहारपूर्वकमा
युरभिवृद्धिद्वारा० अथवा अमुकशत्रुपराभव
पूर्वकं अमुकवशीकरणसिद्धिद्वारा० अथवा
ग्रहपीडानिवारणपिशाचोपद्रवादिसर्वानिष्ट
निवारणपूर्वकं क्षेमायुःसकलैश्वर्यसिद्धिद्वारा
श्रीजगदंबामहाकालीमहालक्ष्मीमहासरस्वती
स्वरूपिणीत्रिगुणात्मिकामुककुलदेवताप्री

 त्यर्थं कवचा० शत्या:प्रतिमंत्रांते शरणागते 
 त्यादिमंत्रपल्लविताया: पाठरीत्याशतपाठात्म
कशतचंड्याख्यं अथवा प्रतिमंत्रं सर्वमंगले
त्यादिमंत्रसंपुटिताया: अथवा प्रतिमंत्रादौ
सर्वस्वरूपइत्यादिमंत्रयोजिताया: पाठरीत्या
शतचंड्याख्यं नवचंडीचिकीर्षायां दशपाठा
त्मकनवचंड्याख्यामित्यूहेविशेष: कर्मकरिष्ये 
इतिप्रथमसंकल्प: ॥ ततोनित्यसंकल्पस्तु पू

र्वसंकल्पितकामनासिद्धये पूर्वसंकल्पितशत
चंडीसंख्यापरिपूर्तये नवचंड्यांनवचंडीसंख्या
परिपूर्तये पूर्वसंकल्पितरीत्यापाठाख्यं कर्मक
रिष्ये तदंगत्वेनादौसंक्षेपतः आसनविधिभूशु
द्ध्यादिकर्म दीपस्थापनपूजनं श्रीसप्तशतीपूज
नं रहस्योक्तयंत्रस्थप्रधानदेवतापूजनं तंत्रोक्त
नवार्णयंत्रस्थप्रधानदेवतापूजनं वा पायसेनइ
क्षुखंडकूष्मांडाद्यन्यतमफलेन वा पूजांगब

लिदानंच सकलशापप्रतिबंधनिवृत्तये तंत्रो
क्तशापोद्धारमंत्रस्य सप्तवारजपं इष्टफलसिद्धि
प्रतिबंधनिवृत्तये तंत्रोक्तोत्कीलनमंत्रस्य पा
ठादौपाठांतेच एकविंशत्येकविंशतिसंख्याज
पंचकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थं महाग
णपतिस्मरणंसद्गुरुपादुकास्मरणंच करिष्ये ॥
गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती ५
निर्विघ्नतासिद्ध्यर्थेमहागणपतिस्मरणेविनियो

गः ॥ ॐ गणानांत्वागणपतिंहवामहेकविंकवी
नामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्प
त आनःशृण्वन्नूतिभिःसीदसादनं ॥ सिद्धिबु
द्धिशक्तिसहितमहागणपतयेनमोनमः इति ॥
ततः नमोगुरुभ्योगुरुपादुकाभ्यो नमः परे
भ्यः परपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादु
काभ्यो नमोस्तुलक्ष्मीपतिपादुकाभ्यः ॥ श्री
गुरुभ्योनमोनमः ॥ इतिश्रीगणपतिंसद्गुरुंचन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० त्वा ॥ अथासनविधिः ॥ सयथा आसनाधोज वि०
५ लादिनात्रिकोणंविलिख्य ॐ ह्रींआधारशक्ति
कमलासनायनमः इत्याधारशक्तिंसंपूज्य तदु
पर्यनुद्धिमताकरं कुशकंबलाद्यन्यतममासन
मास्तीर्य पृथ्वीतिमंत्रस्य मेरुपृष्ठऋषिः कूर्मोदे
वता सुतलंछंदः आसनेविनियोगः ॐ पृथ्वित्व
याधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधार ५
यमांदेविपवित्रंकुरुचासनं ॥ इत्याधारशक्तिंसं

प्रार्थ्य ॐ भूर्भुवःस्वःइत्यासनंसंप्रोक्ष्यतदुपरि प्राङ्मुखउदङ्मुखोवाउपविश्य ॐ अनंतासनायनमः ॐ कूर्मासनायनमः ॐ विमलासनायनमः ॐ पद्मासनायनमः ॐ योगासनायनमः ॐ आधारशक्त्यैनमः ॐ दुष्टविद्रावणनृसिंहासनायनमः ॐ मध्येपरमसुखासनायनमः इतिनत्वा ॐ ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभक्षणे ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजि

स० ते ॥ इतिशिखामाबद्ध्य ॥ अथबाह्यभूतशुद्धिः वि०
६ ॐ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥
येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ ॐ
अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ स
र्वेषामविरोधेनजपकर्मसमारभे ॥ इतिभूता
न्युत्सार्य ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनो
पम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ ६
इतिभैरवाज्ञांगृहीत्वा ॥ ॥ अथस्थलशुद्धिः ॥

देवतामंडपंचतुर्द्वारंविचिन्त्य ॐ अंतरित ॢर
क्षोंतरिताअरातयः हुंफट् इतिमंडपांतःअक्ष
तान्क्षिप्त्वा वामतोगुंगुरुभ्योनमः दक्षिणतो
भंभद्रकाल्यैनमः उपरिष्टात् गंगणपतयेनमः
इतिद्वारदेवताःसंपूज्य ॥ अथविघ्नोत्सारणंआ
त्मरक्षणंच ॥ यथा मूलंपठन्दिव्यदृष्ट्यवलोक
नेनदिव्यान् विघ्नानुत्सारयामि ॐ फडिति
प्रोक्षणेनांतरिक्षान्विघ्नानुत्सारयामि ॐ फडि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तिवामपादपार्ष्णिघातेनभौमान् विघ्नानुत्सा
रयामि ॐ अस्त्रायफट् इतितालत्रयेणदिग्बंध
नंकृत्वा ॐ नमःसुदर्शनायअस्त्रायफट् इतिमं
त्रेण छोटिकयावह्निप्राकारत्रयंविभाव्य भूशु
द्ध्यादीनिकुर्यात् ॥ भूशुद्धिर्यथा गायत्र्याप्राणा
नायम्य हुंइतिबीजेनकुंडलिनीमुत्थाप्य हृदि
स्थंदीपकलिकाकारंजीवं ॐ हंसः इतिमंत्रेणब्र ७
ह्मणिसंयोज्य स्वदक्षिणकुक्षिस्थंपापपुरुषंध्या

त्वा यं इति १६ षोडशवारोच्चारितवायुबीजे
नपिंगलयापूरकेण तंपापपुरुषंशोषयित्वाकुं
भके रं इति ६४ चतुःषष्टिवारोच्चारितवह्निबी
जेनतंदग्ध्वा पुनः यं इति ३२ द्वात्रिंशद्वारो
च्चारितवायुबीजेनतद्भस्मइडयारेचयेत् ॥ ब्र
ह्मरंध्रगतेचंद्रमंडलेऽमृतवर्षिणीं ॥ भवानींभू
मिशुद्ध्यर्थंभावयेदमृतेश्वरीं ॥ ततस्तन्मौलि
निष्पंदसुधाकल्लोलवृष्टिभिः ॥ चिंतयेन्मनसा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्मानंभूमिशुद्धिरियंभवेत् ॥ इतिसंक्षेपतोभू
शुद्धिः ॥ ॥ अथभूतशुद्धिः ॥ इडयावायुमापूर्य
कुंभकेलंवंरंयंहं इतिपंचभूतबीजानिसकृदाव
र्त्यपिंगलयारेचयेत् ॥ ततोवमित्यमृतबीजेनप्रा
णायामं कृत्वा सद्भासनात्मकंदेवीशरीरमुत्पा
द्यसोहंइतिमंत्रेण कुंडलिनीं ब्रह्मणोवहृत्यतत्र
स्थंजीवंहृदिनिधाय कुंडलिनीं मूलाधारगतां
विभावयेदितिसंक्षेपतोभूतशुद्धिः ॥ ॥ अथ

प्राणप्रतिष्ठा ॥ हृदिहस्तंदत्वा ॐ आंह्रींक्रोंम
मप्राणाइहप्राणाः ॐ आंह्रींक्रोंममजीवइहस्थि
तः ॐ आंह्रींक्रोंममसर्वेंद्रियाणि ॐ आंह्रींक्रों
ममवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इ
हागत्यसुखंचिरंतिष्ठंतुस्वाहा ॐअसुनीतेपुनर
स्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्यो
क्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानःस्वस्ति ॥
ममगर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थं पंच

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दशप्रणवावृत्तीःकरिष्ये ॥ ॐ१५ ॥ रक्तांभोधि
स्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पा
शंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणा
न् ॥ बिभ्राणासृक्कपालंत्रिनयनलसितापीनव
क्षोरुहाढ्या देवीबालार्कवर्णाभवतुसुखकरीप्रा
णशक्तिःपरानः ॥ सुप्रतिष्ठितमस्त्वितिसंक्षेपे
णप्राणप्रतिष्ठा ॥ ॥ ततोमातृकान्यासोयथा
॥ अंजलिंबद्ध्वा अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओं

औंअंअ:कंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदं धंनंपंफंबंभंमंयंरंलंवंशंषंसंहंळंक्षं इतिमातृका बीजान्यंजलिगतानिविभाव्य मूर्धादिपादांतं त्रिन्र्यसेदितिसंक्षेपः ततोमूलेनाचम्यप्राणाना यम्य॥अथदीपस्थापनं घृतदीपोभवेद्दक्षेतैलदी पस्तुवामतः ॥ सितवार्तियुतोदक्षेरक्तवर्तिस्तु वामतः ॥ देव्याइतिशेषः ॥ तत्स्थापनप्रका रः ॥ देवीपीठदक्षिणतोभूमौगंधेनत्रिकोणंवि

स० लिख्यदीपाधारयंत्रायनमः इतिगंधपुष्पाक्ष वि०
१० तैःसमर्च्य तत्रघृतपूर्णशुक्लवर्तियुतंदीपपात्रंसं
स्थाप्यदीपंप्रज्वाल्यनाम्नापंचोपचारैःसंपूज्य॥
भोदीपदेवीरूपस्त्वंकर्मसाक्षीह्यविघ्नकृत्॥या
वत्कर्मसमाप्तिःस्यात्तावत्त्वंसुस्थिरोभवेतिसंप्रा
र्थ्य तेनैवप्रकारेण देवीपीठवामभागेप्राग्वत्त्रि
कोणेतैलपूर्णरक्तवर्तियुतंदीपपात्रंसंस्थाप्य दी १०
पंप्रज्वाल्यसंपूज्यभोदीपेतिप्रार्थयेत् इत्येवं

स्थापितदीपावासमाप्तिरक्षेदिति ॥ अथयंत्रेदे वतास्थापनं दीपद्वयमध्यपीठेताम्राद्यन्यतम पत्रेभूर्जपत्रेवाकुंकुमादिनादे[१]व्यष्टगंधेनवायंत्रं लिखेत् वैकृतिकरहस्योक्तम् ॥

---

१.—दे[१]व्यष्टगंधोयथा । चं[१]दना[२]गुरु[३]कर्पूरंकुं[४]कुमंरो[५]चनंतथा ॥ शि[६]लारसोजं[७]टामांसीकि[८]र्चूरंचैकवृद्धितः ॥ १ ॥ एकवृद्धितः चंदनः १ अंशः ततः परस्यैकवृद्धिः नाम अगुरुः २ अंशौ ततः परस्य कर्पूरस्यैकवृद्धिः नाम अंशाः ३ एवमग्रे एकवृद्धिर्ज्ञेया, अन्यत्सुगमम् ॥

स० महालक्ष्मीर्यदापूज्येत्यादिश्लोकत्रयोक्तयंत्रंयथा- वि०

११

| | | |
|---|---|---|
| ॐ गौर्यासह रुद्रायनमः ५ | ॐ स्वरयासह विरिंचये नमः ४ | ॐ लक्ष्म्यासह हृषीकेशाय नमः ६ |
| ॐ ऐंमहाकाल्यै नमः १ | ॐ ह्रींमहालक्ष्म्यै नमः २ | ॐ क्लींमहासरस्वत्यै नमः ३ |
| ॐ अष्टभुजायै नमः ९ | ॐ अष्टादशभुजायै नमः ७ | ॐ दशाननायै नमः ८ |

| | | | |
|---|---|---|---|
| ॐ महिषाय नमः १० | ॐ सिंहाय नमः ११ | ॐ कालाय नमः १२ | ॐ मृत्यवे नमः १३ |

११

इति दशावरणदेवताः ।

अथवातांत्रिकंनवार्णोक्तंयंत्रंयथा ॥




अथलिखेदष्टदलमित्या
दिश्लोकद्वयोक्तं नवार्ण
यंत्रं अस्मिन्यंत्रेनावर
णानिकिंतुमूलमंत्रांते
श्रीमहाकालीमहाल
क्ष्मीमहासरस्वतीस्वरू
पिण्यैदुर्गायैनमः इतिमंत्रेणावाहनादिसर्वोप

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





चारान्समर्पयेत् ॥ तद्यथा ॥ लिखेदष्टदलंप
द्मंचंदनागुरुकुंकुमैः ॥ पद्ममध्येलिखेच्चक्रंषट्
कोणंचंडिकामयं ॥ १ ॥ षट्कोणचक्रमध्यस्थ
माद्यबीजत्रयंलिखेत् ॥ पूर्वादिकोणषट्केतुबी
जान्यन्यानिविन्यसेत् ॥ २ ॥ अथवातंत्रोक्तं
सप्तशतीमहायंत्रं ॥ वेद्यांविरचितेरम्येसर्वतो
भद्रमंडले ॥ घटंसंस्थाप्यविधिवत्तत्रावाह्यार्च
येच्छिवां ॥ ३ ॥ तदग्रेकन्यकाश्चापिपूजयेद्वा

महाबाहुस्तस्मैनित्यं० वरुणायसांगायेत्यादि० ॥ ५ ॥ तववाय० सवप्रा
णात्मकोवायुःसर्वजंतुष्ववस्थितः ॥ ध्वजहस्तोमहाप्राणस्तस्मैनित्यं० वायवे
सांगायेत्यादि० ॥ ६ ॥ सोमोधेनुं० गौरोयस्तुपुमान्सौम्यःसर्वौषधिसम
न्वितः ॥ नक्षत्राधिपतिःसोमस्तस्मैनित्यं० सोमायसांगायेत्यादि० ॥ ७ ॥
तमीशानं० ईशानःपुरुषःशुक्लःसर्वदेवाधिपोमहान् ॥ शूलहस्तोविरूपाक्षस्त
स्मैनित्यं० ईशानायसांगायेत्यादि० ॥ ८ ॥ आयंगौःपृश्नि० योसावनंतरूपे
णब्रह्मांडंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यं० अनंतायसांगायेत्या
दि० ॥ ९ ॥ ब्रह्मजज्ञानं० पद्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः ॥ कमंड
लुधरोदेवस्तस्मै० ॥ ब्रह्मणेसांगायेत्यादि० ॥ १० ॥ नवग्रहेभ्यःसांगेभ्य
इत्यादिनाग्रहेभ्योबलिंदत्वाक्षेत्रपालायदद्यात् ॥ क्षेत्रस्यपतिना० सर्वभूता
धिपायक्षेत्राधिपतये शाकिनीडाकिनीभूतप्रेतपिशाचादिपरिवारसहिताय इमं
बलिंसमर्पयामि ॥ भोक्षेत्रपालइमंबलिंभक्षदिशोरक्षममयजमानस्यवाआयुः
कर्तेत्यादि० ॥ बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरु

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





द्राःसुपर्णाःपन्नगाःखगाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ डा
किन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्या
धरानगाः ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांति
कर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौ
म्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ इतिमंत्रान्पठेत् ॥ अयंबलिःशूद्रे
णदुर्ब्राह्मणेनवानेयः ॥ ततोहस्तौपादौप्रक्षाल्याचम्य पूर्णाहुतिंजुहुयात् ॥
स्रुचिस्रुवेणद्वादशवारमाज्यंगृहीत्वानारिकेलादिचगृहीत्वा ॥ समुद्रादूर्मिं०
३ मूर्धानं० १ पुनस्त्वा० पूर्णादर्वि० सप्ततेअग्ने० धामंतेविश्वं० मूलमंत्रः
नमोदेव्यैइत्यादिमंत्राश्च ॥ ततोवसोर्धारांहुत्वाप्रणीताविमोकादिकर्मशेषं
समाप्य ॥ मूलमंत्रेणहोमदशांशेनदुग्धेनजलेनवातर्पणंकृत्वातेनैवमंत्रेणतद्द
शांशेनमार्जयेत् ॥ ततोयजमानआचार्यादीन्वस्त्राद्यैःसंपूज्य तेभ्योगोमिथु ९
नानिहिरण्यंचदद्यात् ॥ ततआचार्यादिभ्योन्येभ्योवाकपिलागोनीलमणि
श्वेताश्वछत्रचामरभूमिशय्यासप्तधान्यानियथासंभवंवादद्यात् ॥ ततआ

चार्यादयःकलशोदकेनसपत्नीकंसकुटुंबंयजमानं समुद्रज्येष्ठाइत्यादिभिःसुरास्त्वेत्यादिभिर्ग्रहमंत्रैश्चाभिषिंचेयुः ॥ ततोयजमानोग्रहाणामुत्तरपूजांकृत्वाचार्येणविसर्जनेकृतेग्रहपीठदानंकृत्वा देवींपंचोपचारैःसंपूज्य महाबलिं दद्यात् ॥ तत्रक्षत्रियादिनाश्वमेषछागमहिषाणामन्यतरोदेयः ॥ विप्रेणतु कूष्मांडबिल्वमिक्षवश्चदेयाः ॥ सचेत्थं ॥ देवींद्रोणपुष्पबिल्वाम्रदलजातीचंपकैःसंपूज्यकर्ताउदङ्मुखः देवीमुखं वा बलिंगंधादिनाभ्यर्च्य ॥ पशुस्त्वं बलिरूपेणममभाग्यादुपस्थितः ॥ प्रणमामिततःसर्वरूपिणंबलिरूपिणं ॥ चंडिकाप्रीतिदानेनदातुरापद्विनाशनं ॥ चामुंडाबलिरूपायबलेतुभ्यंनमोस्तुते ॥ यज्ञार्थेबलयःसृष्टाःस्वयमेवस्वयंभुवा ॥ अतस्त्वांघातयाम्यद्यतस्माद्यज्ञेवधोवधः ॥ इतिबलिमभिमन्त्र्य ऐं ह्रीं श्रीं इतिमंत्रपुष्पंक्षिप्त्वा ॥ रसनात्वंचंडिकायाःसुरलोकप्रसाधकः ॥ ह्रांह्रींखड्ग आंहुंफट्इतिखड्गमन्त्र्य द्वाशस्त्रंसंपूज्य ॐ कालिकालियज्ञेश्वरिलोहदंडायैनमः ॥ इतिबलिंछेदयित्वा ॐ ह्रीं ऐं ह्रीं कौशिकिरुधिरेणाप्यायतां इतिदेव्यैनिवेद्यततोमाष

पिष्टमयंशत्रुंकृत्वाखङ्गेनछेदयित्वा स्कंदायविशिखायचदत्वा बलिशेषंरक्षो
भ्योहरेत् ॥ मंत्रस्तु ॐ ह्रींस्फुरस्फुर कुंभ २ सूनु २ गुलु २ धुनु २
१० मारय २ विद्रावय २ विदारय २ कंपय २ कंपातय २ पूरय २ ॐ ह्रीं
ॐ हुं फट् २ हुं मर्दय २ हुं ॥ ततःशेषंबहिर्दद्यात् । तत्रमंत्राः बलिंगृह्णं
त्विमंदेवाइत्यादयःपूर्वोक्ताएव ॥ ततःस्नात्वातिलकंधृत्वादेवींप्रार्थयेत् ॥
तत्रमंत्राः ॥ ॥ खङ्गिनीशूलिनीघोरा० १ शूलेनपाहिनोदेवि० ४ नमोदेव्यै
महादेव्यै० ६ रूपंदेहियशोदेहिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहि
सर्वान्कामांश्चदेहिमे ॥ महिषघ्निमहामायेचामुंडेमुंडमालिनि ॥ आयुरारो
ग्यमैश्वर्यंदेहिदेविनमोस्तुते ॥ इतिदेवींसंप्रार्थ्य गुह्यातिगुह्यगोप्त्रीत्वंगृहाणा
स्मत्कृतंजपं ॥ सिद्धिर्भवतुमेदेविप्रसादात्तवसुंदरि ॥ इतिदेव्यैजपंनिवेद्य ॥
कृतस्यकर्मणःसांगतासिद्ध्यर्थंकुमारीब्राह्मणसुवासिनीःपूजापूर्वकंसंभोज्य संक १०
ल्पयवा न्यूनातिरिक्तदोषपरिहारार्थंब्राह्मणेभ्योभूयसींदक्षिणांदत्वाग्निंसंपूज्यवि
भूतिंधृत्वा गच्छगच्छेत्यग्निंविसृज्यमूलमन्त्रेणपुष्पेणदेवीमुद्वास्य तेनैवषडंगंकृ

ह्मणानपि॥ उपचारैस्तुविविधैर्नैवाणांविरणैरपी
ति॥४॥अथप्रयोगः॥ वेद्यांसर्वतोभद्रेब्रह्मादिमं
डलदेवताआवाह्यसंपूज्य तस्मिन्महीद्यौरित्या
दिमंत्रैःकलशंसंस्थाप्यतत्रवरुणंसंपूज्य तन्मू
लेमूलाधारायनमःमूलाधारमावाहयामि १ इ
तिसर्वत्र तदुपरिकूर्मायनमः२तदुपरिशेषाय०
३ तदुपरिपृथिव्यैनमः ४ पूर्णपात्रेॐकारपीठा
स.२ य० ५ पूर्वे ॥ पूर्णगिरिपीठायनमः ६ निर्ऋति

भागे ॥ कामगिरिपीठायनमः वायुभागेआवाह्य
संपूज्यउपरियंत्रंसंस्थाप्यप्राणप्रतिष्ठांकुर्यात् ॥
अथसंक्षेपतःपूजाविधिः ॥ अस्यश्रीनवार्णमंत्र
स्य ब्रह्माविष्णुमहेश्वराऋषयः गायत्र्युष्णिगनु
ष्टुभश्छंदांसि श्रीमहाकालीमहालक्ष्मीमहासर
स्वत्योदेवताः नंदाशाकंभरीभीमाःशक्तयः र
क्तदंतिकादुर्गाभ्रामर्योबीजानि अग्निवायुसूर्या
स्तत्त्वानि श्रीजगदंबाप्रीत्यर्थेंन्यासेपूजायांच

विनियोगः ॥ ऋष्यादिन्यासान् मूलषडंगन्या
सांश्चविधाय कलशशंखघंटाःसंपूज्य ॥ अप
वित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरे
त्पुंडरीकाक्षंसबाह्याभ्यंतरंशुचिः ॥ मूलेना
त्मानंपूजाद्रव्याणिचप्रोक्षेत् विस्तरभयादर्घ्य
स्थापनंनेहलिख्यते ॥ यंत्रंसंस्पृश्य ॐआंसोहं इ
तित्रिवारोच्चारितमंत्रेणयंत्रस्यप्राणप्रतिष्ठांकृ
त्वा ततः त्रिखंडामुद्रयापुष्पमादायस्वहृदि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



१४ स्थांत्रिगुणांदेवीं सुषुम्णामार्गेणब्रह्मरंध्रद्वाराकु
सुमेसमागतांविभाव्य तत्ररूपत्रयंबिभ्राणां
ध्यायेत् खड्गंचक्र० १ अक्षस्रक्प० २ घंटाशू
ल० ३ इति तत्पुष्पंयंत्रेसंस्थाप्यतत्रमध्यबी
जत्रयेमहालक्ष्म्यादिदेवतात्रयंसंस्थितंविभाव
येत् ततःआवाहनी, स्थापनी, संनिधापिनी,
संनिरोधिनी, धेनु, योनिमुद्रामूलेनप्रदर्श्यमूल १४
मुच्चार्यश्रीमहाका० नमः आवाहयामि एवंमू

लेनासनपाद्यार्घ्याचमनीयस्नानमंगलस्नानम
धुपर्कपंचामृतपूजांविधाय श्रीसूक्तादिभिरभि
षिच्य मूलेन वस्त्रोपवस्त्रोत्तरीयकंचुकीवस्त्रय
ज्ञोपवीतचंदनालंकारहरिद्राकुंकुमकज्जलसिं
दूरपरिमलद्रव्यकंकणकंठसूत्रादिसौभाग्यालं
कारपुष्पाणि ॥ मूलं श्रीमहा० ३ नमः अमुकं
समर्पयामिइतिप्रत्युपचारमुच्चार्य पुष्पांतपूजा
यांआवरणदेवताआवाह्यसंपूजयेत् ॥ अत्रसर्व

त्र ॥ पूज्यपूजकयोर्मध्येप्राचीदिक्संप्रकीर्तिता ॥ इतिवचनमनुसृत्य प्रागादिदिशोग्राह्याः ॥ इंद्रादिलोकपालतदायुधविषयेतु सूर्योदयिकैवेतिज्ञेयं ॥ तत्रयंत्रषट्कोणस्थपश्चिमकोणे महालक्ष्मीपृष्ठभागे सरस्वतीब्रह्मभ्यांनमःसरस्वतीब्रह्माणावावाहयामीत्येवंसर्वत्रावाहनेवाच्यं १ एवंनैर्ऋत्यकोणे गौरीरुद्राभ्यां० २ वायुकोणे लक्ष्मीहृषीकेशाभ्यां० ३ पूर्वकोणे अष्टाद

शभुजायै० ४ अग्निकोणे दशाननायै० ५ ई
शानकोणे अष्टभुजायै० ६ दयाब्धेत्राहिसंसार
सर्पान्मांशरणागतं ॥ भक्त्यासमर्पयेतुभ्यंप्रथ
मावरणार्चनं ॥ अनेनप्रथमावरणार्चनेनभगव
तीश्रीमहा० ३ प्रीयतां ॥ १ ॥ पुनःषट्कोणेषु
प्रागादिषु ॥ ॐनंनंदजायै० १ ॐरंरक्तदंतिका
यै० २ ॐशांशाकंभर्यै० ३ ॐदुंदुर्गायै० ४ ॐ
भींभीमायै० ५ भ्रांभ्रामर्यै० ६ दयाब्धेत्राहि०

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





॥ २ ॥ षट्कोणाद्बहिराग्नेयादिचतुर्भागेषु ॐ
जंजयायै० १ ॐविंविजयायै० २ ॐ जंजयंत्यै
३ ॐअंअपराजितायै० ४ षट्कोणपार्श्वयोः
दक्षिणभागे ॐसिंहाय० ५ उत्तरभागे ॐम
हिषाय० ६ दयाब्धे० तृतीयावरणार्चनं अने
न० ॥ ३ ॥ अष्टपत्रेषुप्रागादिषु ॐब्रांब्राह्म्यै०
१ ॐ मांमाहेश्वर्यै० २ ॐकौंकौमार्यै० ३ ॐवैं
वैष्णव्यै०४ॐवांवाराह्यै०५ ॐनांनारसिंह्यै०६

ॐऐंऐंद्र्यै० ७ ॐचांचामुंडायै० ८ दयाब्धे० च
तुर्थावरणार्चनं अनेन० ॥ ४ ॥ पुनरष्टदलेषुप्रा
गादिषु ॐअंअसितांगभैरवाय० १ ॐरुंरुरुभैर
वाय० २ ॐचंचंडभैरवाय० ३ ॐक्रोंक्रोधभैर
वाय० ४ ॐउंउन्मत्तभैरवाय० ५ ॐकंकपा
लभै० ६ ॐ भींभीषणभैरवाय० ७ ॐसंसंहार
भै०८ दयाब्धे० पंचमावरणार्चनंअनेन० ॥५॥
चतुर्विंशतिदलेषुप्रागादिक्रमेण ॐविष्णुमा

स० यायै० १ एवंप्रणवःसर्वत्रादौ ॥ ॐचेतनायै० वि०
१७ २ बुद्ध्यै० ३ निद्रायै० ४ क्षुधायै० ५ छा
यायै० ६ शक्त्यै० ७ तृष्णायै० ८ क्षांत्यै० ९
जात्यै० १० लज्जायै० ११ शांत्यै० १२ श्रद्धा-
यै० १३ कांत्यै० १४ लक्ष्म्यै० १५ धृत्यै० १६
वृत्त्यै० १७ स्मृत्यै० १८ दयायै० १९ तुष्ट्यै
२० पुष्ट्यै० २१ मात्रे० २२ भ्रांत्यै० २३ चित्यै० १७
२४ दयाब्धे० षष्ठाख्यावरणार्चनं अनेन०

॥ ६ ॥ भूगृहरव्युदयप्रागादिषु ॐलंइंद्राय० रंअग्नये० मंयमायन० क्षंनिर्ऋतये० वंवरुणाय० यंवायवे० संसोमाय० हंरुद्राय० ईशानीप्रागंतराले ॐआंब्रह्मणे० वरुणनिर्ऋत्यंतराले ह्रींशेषाय० १० दयाब्धे० सप्तमावरणार्चनं अनेन० ॥ ७ ॥ पुनस्तेनैव क्रमेण वंवज्राय० शंशक्त्यै० दंदंडाय० खंखड्गाय० पांपाशाय० अंअंकुशाय० गंगदायै० त्रिंत्रिशूलाय० पंपद्मा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० य० चंचक्राय० १० दयाब्धे० अष्टमावरणा वि०
१८ र्चनं अनेन० ॥ ८ ॥ भूगृहाद्बहिःप्रागादिदिक्षु
ॐ गंगणपतये० क्षैंक्षेत्रपालाय० बंबटुकाय०
यौंयोगिनीभ्योनमः ४ दयाब्धे० नवमावरणा
र्चनं अनेन० ॥ ९ ॥ ॐ आवरणदेवताभ्योनमः
चंदनं० इत्यादिपंचोपचारपूजा ॥ ततः मूल
मुच्चार्यश्रीमहा० ३ धूपं, दीपं, नैवेद्यं, तांबूलं, १८
दक्षिणां, फलानि, महानीराजनदीपं०, कर्पूर

दीपं, नमस्कारान्, प्रदक्षिणाः, मंत्रपुष्पं० ॥
अपराधसहस्राणिक्रियंतेहर्निशंमया ॥ दासोय
मितिमांमत्वाक्षमस्वपरमेश्वरि ॥ १ ॥ आवाह
नंनजानामिनजानामिविसर्जनं ॥ पूजांचैवन
जानामिक्षम्यतांपरमेश्वरि ॥ २ ॥ मंत्रहीनंक्रि
याहीनंभक्तिहीनंसुरेश्वरि ॥ यत्पूजितंमयादेवि
परिपूर्णंतदस्तुमे ॥३॥ अपराधशतंकृत्वाजगदं
बेतिचोच्चरेत् ॥ यांगतिंसमवाप्नोतिनतांब्रह्माद

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० य:सुराः ॥ ४ ॥ सापराधोस्मिशरणंप्राप्तस्त्वां वि०
१९ जगदंबिके ॥ इदानीमनुकंप्योहंयथेच्छसित
थाकुरु ॥ ५ ॥ अज्ञानाद्विस्मृतेर्भ्रांत्यायन्न्यून
मधिकंकृतं ॥ तत्सर्वंक्षम्यतांदेविप्रसीदपरमे
श्वरि ॥ ६ ॥ कामेश्वरिजगन्मातःसच्चिदानंद
विग्रहे ॥ गृहाणार्चामिमांप्रीत्याप्रसीदपरमेश्व
रि ॥ ७ ॥ गुह्यातिगुह्यगोप्त्रीत्वंगृहाणास्मत्कृ १९
तंजपं ॥ सिद्धिर्भवतुमेदेवित्वत्प्रसादात्सुरेश्वरि

॥ ८ ॥ प्रार्थनां० ॥ गीतवाद्यनृत्यछत्रचामरांदो
लनदर्पणसर्वराजोपचारार्थेअक्षतान्० ॥ नम
स्करोमि ॥ अनेनयथाशक्त्यर्चनेनभगवतीश्री
जगदंबा० ३ प्रीयतां ॥ शाक्तेभ्योनमःसर्वोप
चारार्थेगंधाक्ष० ॥ ॥ अथकुमारीपूजा ॥ यज
मानः पूजयेच्चकन्यानांनवकंशुभं ॥ द्विवर्षाद्या
दशाब्दांताः कुमारीः परिपूजयेत् ॥ १ ॥ अ
श्रीदैकहायनाल्पवयस्कावर्ज्याः ॥ ताआसने

स० उपवेश्यावाहयेन्मंत्रेण ॥ मंत्राक्षरमयींलक्ष्मीं वि०
२० मातृणांरूपधारिणीं ॥ नवदुर्गात्मिकांसाक्षा
त्कन्यामावाहयाम्यहं ॥ १ ॥ अनेनैवमंत्रेणन
वापिआवाहयेत् ॥ अशक्तौयथाशक्तिएकाम
पि ॥ अथनवानांपूजामंत्राः ॥ द्विहायनाकुमा
रीसंज्ञका ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिस्वरू
पिणि ॥ पूजांगृहाणकौमारिजगन्मातर्नमोस्तु २०
ते ॥ २ ॥ त्रिहायनात्रिमूर्तिस्तन्मंत्रः ॥ त्रिपुरां

त्रिपुराधारांत्रिवर्षांज्ञानरूपिणीं ॥ त्रैलोक्यवं
दितांदेवींत्रिमूर्तिंपूजयाम्यहं ॥ ३ ॥ चतुर्वर्षा
कल्याणीतत्पूजामंत्रः ॥ कलात्मिकांकलाती
तांकारुण्यहृदयांशिवां ॥ कल्याणजननींदेवींक
ल्याणींपूजयाम्यहं ॥ ४ ॥ पंचवर्षारोहिणीत
त्पूजामंत्रः ॥ अणिमादिगुणाधारामकाराद्यक्ष
रात्मिकां ॥ अनंतशक्तिकांलक्ष्मींरोहिणींपूज
याम्यहम् ॥५॥ षड्वर्षाकालिका तत्पूजामंत्रः ॥

कामचारांशुभांकांतांकालचक्रस्वरूपिणीं ॥
कामदांकरुणोदारांकालिकांपूजयाम्यहम् ॥६
सप्तवर्षाचंडिका तत्पूजामंत्रः ॥ चंडवीरांचंड
मायांचंडमुंडप्रभंजनीं ॥ पूजयामिसदादेवीं
चंडिकांचंडविक्रमां ॥ ७ ॥ अष्टवर्षाशांभवी
तत्पूजामंत्रः ॥ सदानंदकरींशांतांसर्वदेवनम
स्कृतां ॥ सर्वभूतात्मिकांलक्ष्मींशांभवींपूजया
म्यहम् ॥ ८ ॥ नवहायनादुर्गा तत्पूजामंत्रः ॥

दुर्गमेदुस्तरेकार्येभवदुःखविनाशिनीं ॥ पूज
यामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीं ॥ ९ ॥
दशवर्षासुभद्रा तत्पूजामंत्रः ॥ सुंदरींस्वर्णव
र्णाभांसुखसौभाग्यदायिनीं ॥ सुभद्रजननींदे
वींसुभद्रांपूजयाम्यहं ॥ १० ॥ इतिप्रत्येकंमंत्रां-
तेतत्तन्नाममंत्रेणनवापिषोडशोपचारैः पंचोप
चारैर्वापूजयेत्इति ॥ ॥ अथबलिदानं मूलांते
श्रीमहालक्ष्म्यैनमः पायसबलिं समर्पयामि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० इतिमहाकाल्यादियोगिन्यंतयंत्रस्थावरणदेव वि०
-२२ ताभ्यःप्रत्येकंसर्वाभ्योबलिंदद्यात् ॥ ॥ अथकू
ष्मांडबलिविधानं ॥ आचम्यप्राणानायम्यदे
शाद्युच्चार्यममसकुटुंबस्य सर्वारिष्टप्रशांतिसर्वा
भीष्टसिद्धिकल्पोक्तफलावाप्तिद्वारा श्रीमहा
का० ३ तीदेवताप्रीत्यर्थंकूष्मांडबलिदानंक
रिष्ये तदंगत्वेनपंचोपचारैःपूजनंबलिपूजनंच २२
करिष्ये ॥ मूलेनमुख्यदेवतांपंचोपचारैःसंपू

ज्यतत्पुरतःस्वयमुदङ्मुखोबलिंप्राङ्मुखं पी
ठेवस्त्रगुंठितं कूष्मांडंनिधाय ॐकूष्मांडबल
येनमःइतिआवाहनवस्त्रगंधादिभिःसंपूज्य अ
भिमंत्रयेत् ॥ पशुस्त्वंबलिरूपेणममभाग्यादव
स्थितः ॥ प्रणमामिततःसर्वरूपिणं बलिरूपि
णं ॥ १ ॥ चंडिकाप्रीतिदानेनदातुरापद्विना
शनं ॥ चामुंडाबलिरूपायबलेतुभ्यंनमोस्तु
ते ॥ २ ॥ यज्ञार्थंबलयःसृष्टाःस्वयमेवस्वयंभु

वा ॥ अतस्त्वांघातयाम्यद्ययस्माद्यज्ञेमतोव 
धः ॥ इति ॥ ततःशस्त्रंगंधादिना संपूज्य अ
भिमंत्रयेत् ऐंर्‍हींश्रीं रसनात्वंचंडिकायाःसुर
लोकप्रसाधकः ॥ इति र्‍हांर्‍हींखड्ग आंहुंफट्
इतिहस्तेशस्त्रंगृहीत्वा ॐ कालिकालिवज्रेश्वरि
लोहदंडायैनमः इतिपठन्छित्त्वाछेदनावसरे
नविलोकयेत् ॥ कौशिकिरुधिरेणाप्यायतामि 
तिदेव्यैअर्धंनिवेद्यअवशिष्टार्धस्य पंचभागान्कृ

त्वा पूतनायैबलिभागंनिवेदयामि चरक्यैब
लि॰ विदार्यैबलि॰ पापराक्षस्यैबलि॰ ततोमाष
पिष्टपशुंशत्रुं शस्त्रेणछित्वा स्कंदायपश्वर्धंसमर्प
यामि विशिखायपश्वर्धंस॰ इतिसमर्प्यशेषंरक्षो
भ्योहरेत् २ मंत्रास्तु ॐह्रींस्फुरस्फुरॐक्रींॐ
हुंफट्मर्दमर्दहुं इति तच्छेषंबहिर्दद्यात् ॥ बलिं
गृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतश्चा
श्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातु

धानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवे
तालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसिद्ध-
गंधर्वाःसाध्याविद्याधरानगाः॥ दिक्पालालोक
पालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिक
र्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापं
मासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्तास्तेभूत
प्रेताःसुखावहाः ॥ भूतानियानीहवसंतितानि
बलिंगृहीत्वाविधिवत्प्रयुक्तं ॥ अन्यत्रवासंपरि

कल्पयंतुरक्षंतुमांतानिसदैवचात्रेति ॥ ततःस्ना
त्वा कृततिलकोदेवींप्रार्थयेत् खड्गिनीशू० ५
शूलेनपा० ४ सर्वस्वरूपे० ५ रूपंदेहिजयंदेहि
भगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वका
मांश्चदेहिमे ॥ महिषघ्निमहामायेचामुण्डेमुण्ड
मालिनि ॥ आयुरारोग्यमैश्वर्यंदेहिदेविनमोस्तु
ते ॥ इतिप्रार्थयेत् एतद्बलिदानंहोमांगं तच्चहो
मोत्तरमेव ॥ पूजांगंवैकल्पिकं ॥ तत्रचपायस

बलिदानमवश्यमेव ॥ इतिबलिदानविधिः ॥
अथसरस्वतीपूजनं ॐनमःपिशाचनिकरांकिनि
त्रिशूलखड्गहस्तोसिंहारूढेएह्येहिआगच्छआग
च्छइमांपूजांगृह्णगृह्णस्वाहा श्रीसप्तशतिसरस्व
त्यैनमआवाहयामि तत ॐह्रींचंडिकायैनमः
इतिमंत्रेणषोडशोपचारैःपूजयेदिति ॥ अथ
शापोद्धारमंत्रः ॥ ॐह्रींक्लींश्रींक्रांक्रींचण्डिकेदे
विशापानुग्रहंकुरुकुरुस्वाहा ७वारंजपेत् ॥ तत

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

उत्कीलनमंत्रः ॥ ॐश्रींक्लींह्रींसप्तशतिचण्डिके
उत्कीलनंकुरुकुरुस्वाहा २१ वारंजपेत् ॥ ततः
श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्यो
नमः श्रीकुलदेवतायैनमः अविघ्नमस्तु ॐना
रायणायनमः ॐनरायनरोत्तमायनमः ॐसर
स्वतीदेव्यैनमः ॐवेदव्यासायनमः॥ ॐनमश्च
ण्डिकायै ॥ ॐमार्कण्डेयउवाच ॥ यद्गुह्यमित्या
दि सार्धपंचाशत् ५०॥ श्लोकात्मकंकवचंपठि

त्वा ॐजयंतीत्यादित्रयोविंशतिश्लोकात्मका
 मर्गलांपठित्वा ॐविशुद्धेत्यादिचतुर्दशश्लोका
त्मकंकीलकंपठेत् अस्यश्रीचण्डीकवचस्यब्रह्मा
ऋषिःअनुष्टुप्छंदः चामुण्डादेवता अंगन्यासो
क्तमातरोबीजं दिग्बंधदेवतास्तत्त्वंश्रीजगदंबा
प्रीत्यर्थेसप्तशतीपाठांगजपेविनियोगः ॥ ॐ
नमश्चण्डिकायै ॥ मार्कण्डेयउवाच ॥ ॐयद्गुह्यं 
परमंलोकेसर्वरक्षाकरंनृणाम् ॥ यन्नकस्यचिदा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

ख्यातंतन्मेब्रूहिपितामह ॥ १॥ ब्रह्मोवाच ॥ अ
स्तिगुह्यतमंविप्रसर्वभूतोपकारकम् ॥ देव्यास्तु
कवचंपुण्यंतच्छृणुष्वमहामुने ॥ २॥ प्रथमंशैल
पुत्रीतिद्वितीयंब्रह्मचारिणी ॥ तृतीयंचन्द्रघण्टे
तिकूष्माण्डेतिचतुर्थकम् ॥ ३ ॥ पंचमंस्कन्द
मातेतिषष्ठंकात्यायनीतिच ॥ सप्तमंकालरात्रि
श्चमहागौरीतिचाष्टमम् ॥ ४ ॥ नवमंसिद्धिदा
त्रीचनवदुर्गाःप्रकीर्तिताः ॥ उक्तान्येतानिना

 मानिब्रह्मणैवमहात्मना ॥ ५ ॥ अग्निनादह्यमा 
नस्तुशत्रुमध्येगतोरणे ॥ विषमेदुर्गमेचैवभया
र्ताःशरणंगताः ॥ ६ ॥ नतेषांजायतेकिंचिदशु
भंरणसंकटे ॥ नापदंतस्यपश्यामिशोकदुःखम
यंनहि ॥ ७ ॥ यैस्तुभक्त्यास्मृतानूनंतेषांसिद्धिः
प्रजायते ॥ प्रेतसंस्थातुचामुण्डावाराहीमहिषा
सना ॥ ८ ॥ ऐन्द्रीगजसमारूढा वैष्णवी गरुडा 
सना ॥ माहेश्वरीवृषारूढा कौमारी शिखिवा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

हना ॥ ९ ॥ ब्राह्मीहंससमारूढा सर्वाभरणभू
षिता ॥ नानाभरणशोभाढ्यानानारत्नोपशोभि
ता ॥ १० ॥ दृश्यन्तेरथमारूढादेव्यःक्रोधस
माकुलाः ॥ शंखंचक्रंगदांशक्तिंहलंचमुसलायु
धम् ॥ ११ ॥ खेटकंतोमरं चैवपरशुंपाशमेव
च ॥ कुन्तायुधं त्रिशूलंचशार्ङ्गमायुधमुत्तमम्
॥ १२ ॥ दैत्यानांदेहनाशायभक्तानामभयाय
च ॥ धारयन्त्यायुधानीत्थंदेवानांचहितायवै

 ॥ १३ ॥ महाबलेमहोत्साहे महाभयविनाशि 
 नि ॥ त्राहिमांदेविदुष्प्रेक्ष्ये शत्रूणांभयवर्धिनि
॥ १४ ॥ प्राच्यांरक्षतुमामैन्द्री आग्नेय्यामग्नि
देवता ॥ दक्षिणेऽवतुवाराहीनैर्ऋत्यांखड्गधा
रिणी ॥ १५ ॥ प्रतीच्यांवारुणीरक्षेद्वायव्यांमृ
गवाहिनी ॥ उदीच्यांरक्षकौबेरि ईशान्यांशूल
धारिणि ॥ १६ ॥ ऊर्ध्वंब्रह्माणीमेरक्षेदधस्ताद्वै 
ष्णवीतथा ॥ एवंदशदिशोरक्षेच्चामुण्डाशव

वाहना ॥ १७ ॥ जयामेअग्रतःस्थातुविजया
स्थातुपृष्ठतः ॥ अजितावामपार्श्वेतुदक्षिणेचा
पराजिता ॥ १८ ॥ शिखांमेद्योतिनी रक्षेदुमा
मूर्ध्नि व्यवस्थिता ॥ मालाधरीललाटेचभ्रुवौर
क्षेद्यशस्विनी ॥ १९ ॥ त्रिनेत्राचभ्रुवोर्मध्येय
मघण्टाचनासिके ॥ शंखिनीचक्षुषोर्मध्ये श्रोत्र
योर्द्वारवासिनी ॥ २० ॥ कपोलौकालिकारक्षे
त्कर्णमूलेतुशांकरी ॥ नासिकायांसुगन्धाचउ

स० त्तरोष्ठेचचर्चिका ॥ २१ ॥ अधरेचामृतकला कव०
२९ जिह्वायांचसरस्वती ॥ दन्तान्रक्षतुकौमारीक
ण्ठमध्येतुचण्डिका ॥ २२ ॥ घण्टिकांचित्रघण्टा
चमहामायाचतालुके ॥ कामाक्षीचिबुकंरक्षे
द्वाचंमेसर्वमंगला ॥ २३ ॥ ग्रीवायांभद्रकाली
चपृष्ठवंशेधनुर्धरी ॥ नीलग्रीवाबहिःकण्ठेनलि
कांनलकूबरी ॥ २४ ॥ खड्गधारिण्युभौस्कंधौबा २९
हूमेवज्रधारिणी ॥ हस्तयोर्दण्डिनीरक्षेदम्बि

काचांगुलीस्तथा ॥ २५ ॥ नखाञ्छूलेश्वरीरक्षे
त्कुक्षौरक्षेन्नलेश्वरी ॥ स्तनौरक्षेन्महालक्ष्मीर्म
नश्शोकविनाशिनी ॥ २६ ॥ हृदयेललितादे
वीउदरेशूलधारिणी ॥ नाभौचकामिनीरक्षेद्गु
ह्यंगुह्येश्वरीतथा ॥ २७ ॥ कट्यांभगवतीरक्षे
ज्जानुनीविन्ध्यवासिनी ॥ भूतनाथाचमेढ्रंमेऊ
रूमहिषवाहिनी ॥ २८ ॥ जंघेमहाबलाप्रो
क्तासर्वकामप्रदायिनी ॥ गुल्फयोर्नारसिंहीच

स० पादौचामिततेजसी ॥ २९ ॥ पादांगुलीःश्री कव०
३० मैरक्षेत्पादाधस्तलवासिनी ॥ नखान्दंष्ट्राकरा
लीच केशांश्चैवोर्ध्वकेशिनी ॥ ३० ॥ रोमकूपे
षुकौबेरीत्वचंवागीश्वरीतथा ॥ रक्तमज्जावसा
मांसान्यस्थिमेदांसिपार्वती ॥ ३१ ॥ अन्त्राणि
कालरात्रिश्चपित्तंचमुकुटेश्वरी ॥ पद्मावतीप
द्मकोशेकफेचूडामणिस्तथा ॥ ३२ ॥ ज्वाला ३०
मुखीनखज्वालाअभेद्यासर्वसंधिषु ॥ शुक्रंब

ह्माणीमेरक्षेच्छायांछत्रेश्वरीतथा ॥ ३३ ॥ अहं
कारंमनोबुद्धिंरक्षमेधर्मचारिणी ॥ प्राणापानौ
तथाव्यानंसमानोदानमेवच ॥ ३४ ॥ यशः
कीर्तिंचलक्ष्मींचसदारक्षतुवैष्णवी ॥ गोत्रमि
न्द्राणीमेरक्षेत्पशून्मेरक्षचण्डिके ॥ ३५ ॥
पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्षतुभैरवी ॥ मा
र्गंक्षेमकरीरक्षेद्विजयासर्वतःस्थिता ॥ ३६ ॥
रक्षाहीनंतुयत्स्थानंवर्जितंकवचेनतु ॥ तत्सर्वं

स० रक्षमेदेविजयन्तीपापनाशिनी ॥ ३७ ॥ पदमे कव०
३१ कंनगच्छेत्तुयदीच्छेच्छुभमात्मनः ॥ कवचेना
वृतोनित्यंयत्रयत्राधिगच्छति ॥ ३८ ॥ तत्रत
त्रार्थलाभश्चविजयःसार्वकामिकः ॥ यंयंकाम
यतेकामंतंतंप्राप्नोतिनिश्चितम् ॥ ३९ ॥ परमै
श्वर्यमतुलंप्राप्स्यतेभूतलेपुमान् ॥ निर्भयोजा
यतेमर्त्यःसंग्रामेष्वपराजितः ॥ ४० ॥ त्रैलो ३१
क्येतुभवेत्पूज्यःकवचेनावृतःपुमान् ॥ इदंतुदे

व्याःकवचंदेवानामपिदुर्लभम् ॥ ४१ ॥ यःप
ठेत्प्रयतोनित्यंत्रिसन्ध्यंश्रद्धयान्वितः ॥ दैवीक
लाभवेत्तस्यत्रैलोक्येष्वपराजितः ॥ ४२ ॥ जी
वेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ नश्यन्ति
व्याधयःसर्वेलूताविस्फोटकादयः ॥ ४३ ॥
स्थावरंजंगमंवापिकृत्रिमंचापियद्विषम् ॥ आ
भिचाराणिसर्वाणिमंत्रयंत्राणिभूतले ॥ ४४ ॥
भूचराःखेचराश्चैवजलजाश्चोपदेशिकाः ॥ सह

 जाःकुलजामालाःशाकिनीडाकिनीतथा ४५॥ 
 अन्तरिक्षचराघोराडाकिन्यश्चमहाबलाः ॥ ग्र
हभूतपिशाचाश्चयक्षगन्धर्वराक्षसाः ॥ ४६ ॥
ब्रह्मराक्षसवेतालाःकूष्माण्डाभैरवादयः ॥ न
श्यन्तिदर्शनात्तस्यकवचेहृदिसंस्थिते ॥ ४७ ॥
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरंपरम् ॥ यश
सावर्धतेसोऽपिकीर्तिमण्डितभूतले ॥ ४८ ॥ 
जपेत्सप्तशतींचण्डींकृत्वातुकवचंपुरा ॥ याव

द्भूमण्डलंधत्तेसशैलवनकाननम् ॥ ४९ ॥ ताव
त्तिष्ठतिमेदिन्यांसन्ततिःपुत्रपौत्रिकी ॥ देहा
न्तेपरमंस्थानंयत्सुरैरपिदुर्लभम् ॥ ५० ॥ प्रा
प्नोतिपुरुषोनित्यंमहामायाप्रसादतः ॥ वाराह
पुराणेहरिहरब्रह्मविरचितं देव्याःकवचम्॥१॥
॥ श्रीजगदंबार्पणमस्तु ॥ ॥ ॥ ॥ ॥
अस्य श्रीअर्गलास्तोत्रमंत्रस्य विष्णुर्ऋषिःअनुष्टु
प्छंदःश्रीमहालक्ष्मीर्देवता श्रीजगदंबाप्रीतये

 सप्तशतीपाठांगजपेविनियोगः ॥ ॐनमश्चण्डि 
 कायै ॥ जयन्तीमङ्गलाकालीभद्रकालीकपा
लिनी ॥ दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमो
स्तुते ॥ १ ॥ मधुकैटभविद्राविविधातृवरदेन
मः ॥ रूपंदेहि जयंदेहि यशोदेहि द्विषोजहि
॥ २ ॥ महिषासुरनिर्नाशविधात्रिवरदेनमः॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ ३ ॥ व 
न्दितांघ्रियुगेदेविसर्वसौभाग्यदायिनि ॥ रूपं

देहिजयंदेहियशोदेहिद्विषोजहि ॥ ४ ॥ रक्तबी
जवधेदेविचंडमुंडाविनाशिनि ॥ रूपंदेहिजयं
देहियशोदेहिद्विषोजहि ॥ ५ ॥ अचिन्त्यरूप
चरितेसर्वशत्रुविनाशिनि ॥ रूपंदेहिजयंदेहिय
शोदेहिद्विषोजहि ॥ ६ ॥ नतेभ्यःसर्वदाभक्त्या
चण्डिकेदुरितापहे ॥ रूपंदेहिजयंदेहियशोदे
हिद्विषोजहि ॥ ७ ॥ स्तुवद्भ्योभक्तिपूर्वंत्वांच
ण्डिकेव्याधिनाशिनि ॥ रूपंदेहिजयंदेहियशो

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 देहिद्विषोजहि ॥ ८ ॥ चण्डिकेसततंयेत्वामर्च 
 यंतीहभक्तितः ॥ रूपंदेहिजयंदेहियशोदेहिद्वि
षोजहि ॥ ९ ॥ देहिसौभाग्यमारोग्यंदेहिदेविप
रंसुखं ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि
॥ १० ॥ विधेहिद्विषतांनाशंविधेहिबलमुच्चकैः ॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ ११ ॥
विधेहिदेविकल्याणंविधेहिपरमांश्रियं ॥ रूपंदे 
हिजयंदेहियशोदेहिद्विषोजहि ॥ १२ ॥ विद्या

वन्तंयशस्वन्तंलक्ष्मीवंतंजनंकुरु ॥ रूपंदेहिज
यंदेहियशोदेहिद्विषोजहि ॥ १३ ॥ प्रचण्डदैत्य
दर्पघ्निचण्डिकेप्रणतायमे ॥ रूपंदेहिजयंदेहिय
शोदेहिद्विषोजहि॥१४॥चतुर्भुजेचतुर्वक्त्रसंस्तु
तेपरमेश्वरि ॥ रूपंदेहिजयंदेहियशोदेहिद्विषो
जहि ॥ १५ ॥ कृष्णेनसंस्तुतेदेविशश्वद्भक्त्या
त्वमम्बिके ॥ रूपंदेहिजयंदेहियशोदेहिद्विषो
जहि ॥ १६ ॥ हिमाचलसुतानाथसंस्तुतेपरमे

स० श्वरि ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ अर्ग०
३५ ॥ १७ ॥ सुरासुरशिरोरत्ननिघृष्टचरणेम्बिके ॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ १८ ॥
इन्द्राणीपतिसद्भावपूजितेपरमेश्वरि ॥ रूपंदे
हिजयंदेहियशोदेहिद्विषोजहि ॥ १९ ॥ देविभ
क्तजनोद्दामदत्तानन्दोदयेम्बिके ॥ रूपंदेहिज
यंदेहियशोदेहिद्विषोजहि ॥ २० ॥ पुत्रान्देहिध ३५
नंदेहिसर्वकामांश्चदेहिमे ॥ रूपंदेहिजयंदेहिय

शोदेहिद्विषोजहि ॥ २१ ॥ पत्नींमनोरमांदेहि
मनोवृत्तानुसारिणीम् ॥ तारिणींदुर्गसंसारसा
गरस्यकुलोद्भवाम् ॥ २२ ॥ इदंस्तोत्रंपठित्वातु
महास्तोत्रंपठेन्नरः ॥ सतुसप्तशतीसंख्यावरमा
प्नोतिसम्पदाम् ॥ २३ ॥ मार्कण्डेयपुराणेअर्ग
लास्तोत्रम् ॥ २ ॥ ॥ अस्यश्रीकीलकमंत्र
स्य शिवऋषिःअनुष्टुप्छंदःश्रीमहासरस्वतीदेव
ता ॥ श्रीजगदंबाप्रीत्यर्थंसप्तशतीपाठांगजपेवि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० नियोगः ॥ ॐनमश्चण्डिकायै ॥मार्कण्डेयउवा कील०
३६ च ॥ विशुद्धज्ञानदेहायत्रिवेदीदिव्यचक्षुषे ॥
श्रेयःप्राप्तिनिमित्ताय नमःसोमार्धधारिणे ॥
॥ १ ॥ सर्वमेतद्विनायस्तुमन्त्राणामपिकीलक
म् ॥ सोपिक्षेममवाप्नोतिसततंजाप्यतत्परः
॥ २ ॥ सिद्ध्यन्त्युच्चाटनादीनिवस्तूनिसकलान्य
पि ॥ एतेनस्तुवतांनित्यंस्तोत्रमात्रेणसिद्ध्यति ३६
॥ ३ ॥ नमन्त्रोनौषधंतत्रनकिंचिदपिविद्यते॥

विनाजाप्येनसिद्ध्येतसर्वमुच्चाटनादिकम् ॥४॥
समग्राण्यपिसिद्ध्यंतिलोकशंकामिमांहरः ॥ कृ
त्वानिमंत्रयामाससर्वमेवमिदंशुभम् ॥ ५ ॥
स्तोत्रंवैचण्डिकायास्तुतच्चगुह्यंचकारसः ॥ स
माप्निर्नचपुण्यस्यतांयथावन्नियन्त्रणाम् ॥ ६ ॥
सोपिक्षेममवाप्नोतिसर्वमेवनसंशयः ॥ कृष्णा
यांवाचतुर्दश्यामष्टम्यांवासमाहितः ॥ ७ ॥
ददातिप्रतिगृह्णातिनान्यथैषाप्रसीदति ॥ इत्थं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रूपेणकीलेनमहादेवेनकीलितम् ॥ ८ ॥ योनि
ष्कीलांविधायैनांनित्यंजपतिसुस्फुटं ॥ ससि
द्धःसगणःसोपिगन्धर्वोजायतेवने ॥ ९ ॥ नचै
वाप्यटतस्तस्यभयंक्वापिहिजायते ॥ नाऽपमृ
त्युवशंयातिमृतोमोक्षमवाप्नुयात् ॥ १० ॥
ज्ञात्वाप्रारभ्यकुर्वीतह्यकुर्वाणोविनश्यति ॥ त
तोज्ञात्वैवसम्पन्नमिदंप्रारभ्यतेबुधैः ॥ ११ ॥
सौभाग्यादिचयत्किंचिद्दृश्यतेललनाजने ॥ त

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

त्सर्वंतत्प्रसादेनतेनजाप्यमिदंशुभम् ॥ १२ ॥
शनैस्तुजप्यमानेस्मिन्स्तोत्रेसम्पत्तिरुच्चकैः ॥
भवत्येवसमग्रापि ततः प्रारभ्यमेवतत् ॥ १३ ॥
ऐश्वर्यंयत्प्रसादेनसौभाग्यारोग्यसम्पदः ॥ श
त्रुहानिःपरोमोक्षःस्तूयतेसानकिंजनैः ॥ १४ ॥
भगवत्याःकीलकस्तोत्रंसमाप्तम् ॥ ३ ॥ ॥
ॐ अस्यश्रीनवार्णमंत्रस्य ॥ ब्रह्मविष्णुरुद्राऋष
यः॥गायत्र्युष्णिगनुष्टुभश्छंदांसि ॥ श्रीमहाका

लीमहालक्ष्मीमहासरस्वत्योदेवताः ॥ नंदाशा 
कंभरीभीमाःशक्तयः ॥ रक्तदंतिकादुर्गाभ्राम
र्योबीजानि ॥ अग्निवायुसूर्यास्तत्त्वानि ॥ श्रीमहा
कालीमहालक्ष्मीमहासरस्वतीप्रीत्यर्थंजपेवि
नियोगः ॥ ब्रह्मविष्णुरुद्रऋषिभ्योनमःशिरसि ॥
गायत्र्युष्णिगनुष्टुप्छंदोभ्योनमःमुखे ॥ श्रीम
हाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्योन 
मोहृदि ॥ नंदाशाकम्भरीभीमाशक्तिभ्योनमो

दक्षिणस्तने ॥ रक्तदंतिकादुर्गाभ्रामरीबीजे
भ्योनमोवामस्तने ॥ अग्निवायुसूर्यतत्त्वेभ्योन
मोनाभौ ॥ इतिऋष्यादिन्यासः ॥ मूलेनकरौ
संशोध्य ॥ अथैकादशन्यासाः॥तत्रादौमातृका
न्यासः ॥ सर्वत्रादौ प्रणवोच्चारः ॥ अंनमोल
लाटे ॥ आंनमो मुखवृत्ते ॥ इंनमोदक्षिणने
त्रे ॥ ईंनमोवामनेत्रे ॥ उंनमोदक्षिणकर्णे ॥
ऊंनमोवामकर्णे ॥ ऋंनमोदक्षिणनासि ॥ ॠं

नमोवामनसि ॥ ऌंनमोदक्षिणगंडे ॥ ॡंन

मोवामगंडे ॥ एंनमऊर्ध्वोष्ठे ॥ ऐंनमोऽधरो
ष्ठे ॥ ओंनमऊर्ध्वदंतपंक्तौ ॥ औंनमोऽधोदंत
पंक्तौ ॥ अंनमःशिरसि ॥ अःनमोमुखे ॥ कंन
मोदक्षबाहुमूले ॥ खंनमोदक्षकूर्परे ॥ गंनमो
दक्षमणिवंधे ॥ घंनमोदक्षांगुलिमूले ॥ ङंन
मोदक्षांगुल्यग्रे ॥ चंनमोवामबाहुमूले ॥ छंन 
मोवामकूर्परे ॥ जंनमोवाममणिवंधे ॥ झंन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.
मोवामांगुलिमूले ॥ ञंनमोवामांगुल्यग्रे ॥ टं
नमोदक्षपादमूले ॥ ठंनमोदक्षजानुनि ॥ डंन
मोदक्षगुल्फे ॥ ढंनमोदक्षपादांगुलिमूले ॥ णं
नमोदक्षपादांगुल्यग्रे ॥ तंनमोवामपादमूले ॥
थंनमोवामजानुनि ॥ दंनमोवामगुल्फे ॥ धंन
मोवामपादांगुलिमूले ॥ नंनमोवामपादांगुल्य
ग्रे ॥ पंनमोदक्षपार्श्वे ॥ फंनमोवामपार्श्वे ॥
बंनमःपृष्ठे ॥ भंनमोनाभौ ॥ मंनमोजठरे ॥ यं

 नमोहृदि ॥ रंनमोदक्षांसे ॥ लंनमःककुदि ॥ 
४० वंनमोवामांसे ॥ शंनमोहृदादिदक्षहस्तांते ॥
षंनमोहृदादिवामहस्तांते ॥ संनमोहृदादिदक्ष
पादांते ॥ हंनमोहृदादिवामपादांते ॥ ळंनमो
जठरे ॥ क्षंनमोमुखे ॥ इति मातृकान्यासोदे
वसारूप्यप्रदः प्रथमः ॥ १ ॥ ऐंह्रींक्लींनमःक
निष्ठयोः ॥ ऐंह्रींक्लींनमोनामिकयोः ॥ ऐंह्रींक्लीं ४०
नमोमध्यमयोः ॥ ऐंह्रींक्लींनमःतर्जन्योः ॥ ऐं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.
ह्रींक्लींनमोंगुष्ठयोः ॥ ऐंह्रींक्लींनमःकरमध्ये ॥
ऐंह्रींक्लींनमः करपृष्ठे ॥ ऐंह्रींक्लींनमोमणिबंध
योः ॥ ऐंह्रींक्लींनमःकूर्परयोः ॥ ऐंह्रींक्लींनमःहृद
यायनमः ॥ ऐंह्रींक्लींनमःशिरसे स्वाहा ॥ ऐंह्रीं
क्लींनमःशिखायैवषट् ॥ ऐंह्रींक्लींनमः कवचाय
हुं ॥ ऐंह्रींक्लींनमोनेत्रत्रयायवौषट् ॥ ऐंह्रींक्लींन
मोऽस्त्रायफट् ॥ इतिसारस्वतोजाड्यविनाश
को द्वितीयः ॥ २ ॥ ह्रींब्राह्मीपूर्वस्यांमापातु ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ह्रींमाहेश्वरीआग्नेय्यांमांपातु ॥ ह्रींकौमारीदक्षि
णस्यांमांपातु ॥ ह्रींवैष्णवीनैर्ऋत्यांमांपातु ॥
ह्रींवाराहीपश्चिमायांमांपातु ॥ ह्रींइंद्राणीवाय
व्यांमांपातु ॥ ह्रींचामुंडाउत्तरस्यांमांपातु ॥ ह्रीं
महालक्ष्मीरैशान्यांमांपातु ॥ ह्रींव्योमेश्वरीऊ
र्ध्वंमांपातु ॥ ह्रींसप्तद्वीपेश्वरीभूमौमांपातु ॥ ह्रीं
कामेश्वरीपातालेमांपातु ॥ इतिमातृगणन्यास
स्त्रैलोक्यविजयप्रदस्तृतीयः ॥ ३ ॥ कमलांकुश

मंडितानंदजापूर्वांगंमेपातु ॥ खड्गपात्रधरार
क्तदंतिकादक्षिणांगंमेपातु ॥ पुष्पपल्लवसंयुता
शाकंभरीपश्चिमांगंमेपातु ॥ धनुर्बाणकरादुर्गा
वामांगंमेपातु ॥ शिरःपात्रकराभीमामस्तका
च्चरणावधिमांपातु॥ चित्रकांतिभृङ्गामरीपादा
दिमस्तकांतंमेपातु ॥ इति जरामृत्युहरोनंद
जादिन्यासश्चतुर्थः ॥ ४ ॥ पादादिनाभिपर्यंतं
ब्रह्मामांपातु ॥ नाभेर्विशुद्धिपर्यंतंजनार्दनोमां

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 पातु ॥ विशुद्धेर्ब्रह्मरंध्रांतंरुद्रोमांपातु ॥ हंसोमे 
 पदद्वयंपातु ॥ वैनतेयःकरद्वयंमेपातु ॥ वृषभ
श्चक्षुषीमेपातु ॥ गजाननःसर्वांगंमेपातु ॥ आ
नंदमयोहरिःपरापरौदेहभागौमेपातु ॥ इति
सर्वकामप्रदोब्रह्मादिन्यासः पंचमः ॥ ५ ॥ अ
ष्टादशभुजालक्ष्मीर्मध्यभागंमेपातु॥अष्टभुजा
महासरस्वतीऊर्ध्वभागंमेपातु ॥ दशभुजामहा 
कालीअधोभागंमेपातु॥सिंहोहस्तद्वयंमेपातु ॥

परहंसोऽक्षियुगंमेपातु ॥ महिषारूढोयमःपदद्व
यंमेपातु ॥ महेशश्चंडिकायुक्तःसर्वांगंमेपातु ॥
इतिमहालक्ष्म्यादिन्यासःसद्गतिप्रदःषष्ठः ॥६॥
ऐंनमोब्रह्मरंध्रे ॥ ह्रींनमोदक्षिणनेत्रे ॥ क्लींनमो
वामनेत्रे ॥ चांनमोदक्षिणकर्णे ॥ मुंनमोवामक
र्णे॥डांनमोदक्षिणनासापुटे ॥ यैंनमोवामनासा
पुटे॥विंनमोमुखे ॥ चैंनमोगुह्ये ॥ इतिमूलाक्षर
न्यासोरोगक्षयकरःसप्तमः ॥७॥ च्चैंनमोगुह्ये ॥

विंनमोमुखे ॥ यैंनमोवामनासापुटे ॥ डांनमो
दक्षिणनासापुटे ॥ मुंनमोवामकर्णे ॥ चांनमो
दक्षकर्णे ॥ क्लींनमोवामनेत्रे ॥ ह्रींनमोदक्षनेत्रे ॥
ऐंनमोब्रह्मरंध्रे ॥ इतिविलोमाक्षरन्यासःसर्वदुः
खनाशकोऽष्टमः ॥ ८ ॥ मूलमुच्चार्य ॥ मस्त
काच्चरणांतं चरणान्मस्तकांतंअष्टवारंव्यापकं
कुर्यात् ॥ सयथा ॥ प्रथमं पुरतोमूलेन मस्त
काच्चरणावधि ॥ १ ॥ ततश्चरणान्मस्तकावधि

मूलोच्चारेणव्यापकं ॥२॥ एवंदक्षिणतः पश्चा
द्वामभागेचेतिप्रतिदिग्भागेऽनुलोमविलोमत
याद्विर्द्विरिति अष्टवारंव्यापकंभवति ॥ इति
देवताप्राप्तिकरोमूलव्यापकोनवमः ॥ ९ ॥
मूलमुच्चार्यहृदयायनमः ॥ एवंप्रत्यंगंसर्वमूल
मुच्चार्यषडंगेषुन्यसेत् ॥ इतिमूलषडंगन्यासस्त्रै
लोक्यवशकरोदशमः ॥ १० ॥ खड्गिनीशूलि
नीघोरागदिनीचाक्रिणीतथा ॥ शंखिनीचापि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नीबाणभुशुंडीपरिघायुधा ॥ १ ॥ सौम्यासौम्य
तराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणांप
रमात्वमेवपरमेश्वरी ॥ २ ॥ यच्चकिंचित्क्वचिद्व
स्तुसदसद्वाखिलात्मिके ॥ तस्यसर्वस्ययाशक्तिः
सात्वंकिंस्तूयसेमया ॥ ३ ॥ ययात्वयाजगत्स्र
ष्टाजगत्पातात्तियोजगत् ॥ सोपिनिद्रावशंनी
तःकस्त्वांस्तोतुमिहेश्वरः ॥ ४ ॥ विष्णुःशरीर
ग्रहणमहमीशानएवच ॥ कारितास्तेयतोऽत

स्त्वांकःस्तोतुंशक्तिमान्भवेत् ॥ ५ ॥ आद्यंवा
ग्बीजंकृष्णतरंध्यात्वासर्वांगेविन्यसामि ॥ इति
सर्वांगेन्यसेत् ॥ शूलेनपाहिनोदेवि पाहिखड्गेन
चांबिके ॥ घंटास्वनेननःपाहिचापज्यानिःस्व
नेनच ॥ १ ॥ प्राच्यांरक्षप्रतीच्यांचचंडिकेरक्ष
दक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्व
रि ॥ २ ॥ सौम्यानियानिरूपाणित्रैलोक्येविच
रंतिते ॥ यानिचात्यंतघोराणितैरक्षास्मांस्तथा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भुवं ॥३॥ खड्गशूलगदादीनियानिचास्त्राणितें
बिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः
॥ ४ ॥ द्वितीयंमायाबीजं सूर्यसदृशंध्यात्वा स
र्वांगेविन्यसेत् ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिसम
न्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते
॥ १ ॥ एतत्तेवदनंसौम्यंलोचनत्रयभूषितं ॥
पातुनःसर्वभूतेभ्यःकात्यायनिनमोस्तुते ॥२॥
ज्वालाकरालमत्युग्रमशेषासुरसूदनं ॥ त्रिशू

लंपातुनोभीतेर्भद्रकालिनमोस्तुते ॥ ३ ॥ हि
नस्तिदैत्यतेजांसिस्वनेनापूर्ययाजगत् ॥ साघं
टापातुनोदेविपापेभ्योनःसुतानिव ॥४॥ असुरा
सृग्वसापंकचर्चितस्तेकरोज्ज्वलः ॥ शुभायख
ड्गोभवतुचंडिकेत्वांनतावयं ॥ ५ ॥ तृतीयंका
मबीजंस्फटिकाभंध्यात्वासर्वांगेविन्यसामि ॥
इति सर्वांगेविन्यसेत् ॥ इति सूक्तादिबीजत्रय
न्यासः सर्वानिष्टहरः सर्वाभीष्टदः सर्वरक्षाकर

श्चैकादशः ॥ ११ ॥ ॥ ॥



अथमूलषडंगन्यासः ॥ ॐऐंअंगुष्ठाभ्यांनमः ॥
ॐह्रींतर्जनीभ्यांनमः ॥ ॐक्लींमध्यमाभ्यांन
मः ॥ ॐचामुंडायैअनामिकाभ्यांनमः ॥ ॐवि
च्चेकनिष्ठिकाभ्यांनमः ॥ ॐऐंह्रींक्लींचामुंडायै
विच्चेकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥
ततोऽक्षरन्यासः ॥ ॐऐंनमःशिखायां ॥ ॐह्रीं
नमःदक्षिणनेत्रे ॥ ॐक्लींनमःवामनेत्रे ॥ ॐचां

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

नमः दक्षिणकर्णे ॥ ॐ मुं नमः वामकर्णे ॥ ॐ डां
नमः दक्षिणनासायां ॥ ॐ यैं नमः वामनासा
यां ॥ ॐ विं नमः मुखे ॥ ॐ च्चें नमः गुह्ये ॥ एवं
विन्यस्याष्टवारं मूलेन व्यापकं कुर्यात् ॥ अथाङ्ग
न्यासः ॥ ॐ ऐं प्राच्यै नमः ॥ ॐ ऐं आग्नेय्यै नमः ॥
ॐ ह्रीं दक्षिणायै नमः ॥ ॐ ह्रीं नैर्ऋत्यै नमः ॥
ॐ क्लीं प्रतीच्यै नमः ॥ ॐ क्लीं वायव्यै नमः ॥ ॐ चा
मुंडायै उदीच्यै नमः ॥ ॐ विच्चे ईशान्यै नमः ॥

ॐऐंह्रींक्लींचामुंडायैविच्चेऊर्ध्वायैनमः ॥ ॐऐं
ह्रींक्लींचामुंडायैविच्चेभूम्यैनमः ॥ अथध्यानं ॥
खड्गं चक्रगदेषुचापपरिघाञ्छूलंभुशुंडींशिरः
शंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृतां ॥ नी
लाश्मद्युतिमास्यपाददशकांसेवेमहाकालिकां
यामस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभम्
॥ १ ॥ अक्षस्रक्परशूगदेषुकुलिशंपद्मंधनुःकुंडि
कांदण्डंशक्तिमसिंचचर्मजलजंघंटांसुराभाज

नं ॥ शूलंपाशसुदर्शनेचदधतींहस्तैः प्रवाल
प्रभां सेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोज
स्थिताम् ॥ २ ॥ घंटाशूलहलानिशंखमुसलेचक्रं
धनुःसायकं हस्ताब्जैर्दधतींघनांतविलसच्छी
तांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवांत्रिजग
तामाधारभूतांमहापूर्वामत्रसरस्वतीमनुभजे
शुंभादिदैत्यार्दिनीम् ॥ ३ ॥ मानसोपचारैःसं
पूज्य ॥ ॐमांमालेमहामायेसर्वशक्तिस्वरूपि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 

णि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मांसिद्धिदा
भव ॥ १ ॥ इतिमालांप्रार्थ्य ॥ ॐ सिद्ध्यैनमइ
तिमालांनत्वाजपेत् ॥ मंत्रार्थस्तुमहासरस्व
त्यादिरूपे चित्सदानंदमयेचंडिकेत्वां ब्रह्मवि
द्याप्राप्त्यर्थंवयंसर्वदाध्यायामः ॥ इत्यर्थानुसं
धानपूर्वकं १०८ नवार्णमंत्रंजप्त्वा षडंगन्यासं
कृत्वा रात्रिसूक्तंजपेत् ॥ तच्चवैदिकंपौराणंवा ॥
तत्रेदंवैदिकं ॥ रात्रीतिसूक्तस्य कुशिकऋषिः ॥

रात्रिर्दैवता ॥ गायत्रीच्छंदः ॥ श्रीजगदंबाप्रीत्य
र्थेसप्तशतीपाठादौजपेविनियोगः ॥ ॐ रात्री
व्यंख्यदायतीपुरुत्रादे॒व्य १क्षभिः ॥ विश्वाअधि
श्रियोधित ॥ ओर्वप्राअमर्त्यानिवतोदे॒व्यु १ द्व
तः ॥ ज्योतिषाबाधतेतमः ॥ निरुस्वसारम
स्कृतोषसंदे॒व्यायती ॥ अपेदुहासतेतमः ॥ सा
नोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥ वृक्षेन
वंसतिंवयः ॥ निग्रामासोअविक्षतनिपद्वंतोनि

स.५

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षिणः ॥ निश्येनासांश्चिदर्थिनः ॥ यावयावृ
क्यं १ वृकंयवयंस्तेनमूर्म्यै ॥ अथानःसुतराभ
व ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमास्थित ॥
उषंऋणेवंयातय ॥ उपतेगाइवाकरंवृणीष्वदुहि
तर्दिवः ॥ रात्रिस्तोमन्नजिग्युषे ॥ १ ॥ इति ॥ अ
थपौराणं ॥ विश्वेश्वरींजगद्धात्रीं स्थितिसंहारका
रिणीम् ॥ निद्रांभगवतींविष्णोरतुलांतेजसःप्र ४९
भुः ॥ १ ॥ ब्रह्मोवाच ॥ त्वंस्वाहात्वंस्वधात्वंहि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

वषट्कारः स्वरात्मिका ॥ सुधात्वमक्षरेनित्येत्रि
धामात्रात्मिकास्थिता ॥ २ ॥ अर्धमात्रास्थिता
नित्यायानुच्चार्याविशेषतः ॥ त्वमेवसंध्यासावि
त्रीत्वंदेविजननीपरा ॥ ३ ॥ त्वयैतद्धार्यतेविश्वं
त्वयैतत्सृज्यतेजगत् ॥ त्वयैतत्पाल्यतेदेवित्व
मत्स्यंतेचसर्वदा ॥ ४ ॥ विसृष्टौसृष्टिरूपात्वं
स्थितिरूपाचपालने ॥ तथासंहतिरूपांतेजग
तोस्यजगन्मये ॥५॥ महाविद्यामहामायामहा

स० मेधामहास्मृतिः ॥ महामोहाचभवतीमहादे रात्रि
५० वीमहेश्वरी ॥ ६ ॥ प्रकृतिस्त्वंचसर्वस्यगुणत्रय
विभाविनी ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च
दारुणा ॥ ७ ॥ त्वंश्रीस्त्वमीश्वरीत्वंह्रीस्त्वंबुद्धि
र्बोधलक्षणा ॥ लज्जापुष्टिस्तथातुष्टिस्त्वंशांतिः
क्षांतिरेवच ॥ ८ ॥ खड्गिनीशूलिनीघोरागदि
नीचक्रिणीतथा ॥ शंखिनीचापिनीबाणभुशुं ५०
डीपरिघायुधा ॥ ९ ॥ सौम्यासौम्यतराशेषसौ

म्येभ्यस्त्वतिसुंदरी ॥ परापराणांपरमात्वमेव
परमेश्वरी ॥ १० ॥ यच्चकिंचित्क्वचिद्वस्तु सद
सद्वाऽखिलात्मिके ॥ तस्यसर्वस्ययाशक्तिःसात्वं
किंस्तूयसेमया ॥ ११ ॥ ययात्वयाजगत्स्रष्टाज
गत्पात्यत्तियोजगत् ॥ सोपिनिद्रावशंनीतःक
स्त्वांस्तोतुमिहेश्वरः ॥ १२ ॥ विष्णुःशरीरग्रह
णमहमीशानएवच ॥ कारितास्तेयतोतस्त्वां
कःस्तोतुंशक्तिमान्भवेत् ॥ १३ ॥ सात्वमित्थं

प्रभावैः स्वैरुदारैर्देविसंस्तुता ॥ मोहयैतौदुरा

धर्षावसुरौमधुकैटभौ ॥ १४ ॥ प्रबोधंचजग
त्स्वामीनीयतामच्युतोलघु ॥ बोधश्चक्रियता
मस्यहंतुमेतौमहासुरौ ॥१५॥ इतिपौराणंरात्रि
सूक्तम् ॥ ॥ अथपल्लवयोजनासंपुटीकरण
पाठज्ञापकंयथा॥पल्लवप्रकारःसर्वमंगल०इति
मंत्रपल्लवे ॐ मार्कंडेयउवाच सर्वमंगल०इति 
प्रणवादिप्रतिसप्तशतीमंत्रांतेपल्लवमंत्रंपठेदि

ति ॥ ॥ अथयोजनाप्रकारः ॐ सर्वमं० ॥ मा
र्कंडेयउवाच ॥ इतिसप्तशतीप्रतिमंत्रादौसप्र
णवंयोजनामंत्रंपठेत् ॥ अथसंपुटीकरणप्रका
रः ॥ ॐशरणा० ॥ मार्कंडेयउवाच शरणा० एवं
सप्तशतीमंत्रादौ मंत्रांतेचसंपुटमंत्रंपठेत् ॥ अ
यंतु शांतिकपौष्टिकवशीकरणादिशुभकर्मसु ॥
शत्रुविद्रावणोच्चाटनाद्युग्रकर्मसु तु तथा ॐ ह्रुं
फट्मार्कंडेय उवाच फट् ह्रुं ॐइति सप्तशती

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मंत्रादौ विद्रावणबीजानिपठित्वातान्येवांते विलोमानिपठेदिति ॥ ॥ ॥ ॥
ॐ श्रीगणेशायनमः ॥ अस्यश्रीसप्तशतीस्तोत्र मालामंत्रस्य॥ब्रह्मविष्णुरुद्राऋषयः ॥ गायत्र्यु ष्णिगनुष्टुभश्छंदांसि॥श्रीमहाकालीमहालक्ष्मी महासरस्वत्योदेवताः ॥ नंदाशाकंभरीभीमाःश क्तयः॥रक्तदंतिकादुर्गाभ्रामर्योबीजानि ॥अग्नि वायुसूर्यास्तत्त्वानि।ऋग्यजुःसामवेदाध्यानानि

॥ मम सकलकामनासिद्ध्यर्थे श्रीमहाकालीमहा
लक्ष्मीमहासरस्वतीप्रीत्यर्थे जपे विनियोगः ॥
तत्रादौन्यासाः ॥ ॐ खड्गिनीशूलिनीघोराग
दिनीचक्रिणीतथा ॥ शंखिनीचापिनीबाणभु
शुंडी परिघायुधा ॥ अंगुष्ठाभ्यांनमः ॥ ॐ शूले
नपाहिनोदेविपाहिखड्गेनचाम्बिके ॥ घंटास्वने
नःपाहि चापज्यानिःस्वनेनच ॥ तर्जनीभ्यां
नमः ॥ ॐप्राच्यांरक्षप्रतीच्यांचचंडिकेरक्षद

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्व
रि ॥ मध्यमाभ्यांनमः ॥ ॐ सौम्यानियानिरू
पाणित्रैलोक्येविचरंतिते ॥ यानिचात्यंतघोरा
णितैरक्षास्मांस्तथाभुवम् ॥ अनामिकाभ्यां
नमः ॥ ॐखड्गशूलगदादीनियानिचास्त्राणितें
बिके ॥ करपल्लवसंगीनितैरस्मान्रक्षसर्वतः ॥
कनिष्ठिकाभ्यांनमः ॥ ॐसर्वस्वरूपेसर्वेशेसर्व
शक्तिसमन्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेवि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

नमोस्तुते ॥ करतलकरपृष्ठाभ्यांनमः ॥ एवं
हृदयादि ॥ ॐखड्गिनीशूलिनीघोरा० हृदया
यनमः ॥ ॐशूलेनपाहिनोदेवि० शिरसेस्वाहा
॥ ॐप्राच्यांरक्षप्रतीच्यांच० शिखायैवषट् ॥
ॐसौम्यानियानिरूपाणि० कवचायहुं ॥
ॐखड्गशूलगदादीनि० नेत्रत्रयायवौषट् ॥ ॐ
सर्वस्वरूपेसर्वेशे० अस्त्रायफट् ॥ अथ चंडीपं
चाक्षरमंत्रन्यासः ॥ ॐह्रींहृदयायनमः ॥ ॐचं

शिरसेस्वाहा ॥ ॐडींशिखायैवषट् ॥ ॐकांकव
चायहुं ॥ ॐयैंनेत्रत्रयायवौषट् ॥ ॐह्रींचंडिका
यैअस्त्रायफट् ॥ अथ चक्रन्यासः ॥ ॐशांभुतेजो
ज्वलज्वालामालिनिपावकेह्रांनंदायैअंगुष्ठा-
भ्यांनमः ॥ ॐशांभुतेजोज्वलज्वालामालिनि
पावकेह्रींरक्तदंतिकायैतर्जनीभ्यांनमः ॥ ॐ
शांभुतेजोज्वलज्वालामालिनिपावके ह्रूंशाकं
भर्यैमध्यमाभ्यांनमः ॥ ॐशांभुतेजोज्वलज्वा

लामालिनिपावकेहैंदुर्गायैअनामिकाभ्यांनमः
॥ ॐशंभुतेजोज्वलज्वालामालिनिपावकेहौं
भीमायैकनिष्ठिकाभ्यांनमः ॥ ॐशंभुतेजोज्व
लज्वालामालिनिपावकेहः भ्रामयैंकरतलकर
पृष्ठाभ्यांनमः॥ एवंहृदयादिषडंगन्यासः ॥ अ
थध्यानम् ॥ विद्युद्दामसमप्रभांमृगपतिस्कंध
स्थितांभीषणां कन्याभिःकरवालखेटविलसद्ध
स्ताभिरासेवितां ॥ हस्तैश्चक्रदरालिखेटविशि

खांश्चापंगुणंतर्जनीं बिभ्राणामनलात्मिकांश
शिधरांदुर्गांत्रिनेत्रांभजे ॥ १ ॥ इतिध्यात्वाम
नसासंपूज्य ॥ गुरुदेवतात्मैक्यंविभाव्यार्थानु
संधानपूर्वकंमध्यमस्वरेणचंडीस्तवंपठेत् ॥ प्र
थमचरित्रस्य ॥ ब्रह्माऋषिः ॥ महाकालीदेव
ता ॥ गायत्रीछंदः ॥ नंदाशक्तिः ॥ रक्तदंतिका
बीजं ॥ अग्निस्तत्त्वं ॥ ऋग्वेदः स्वरूपम् ॥ श्रीम
हाकालीप्रीत्यर्थंधर्मार्थंजपेविनियोगः ॥ खड्गं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

चक्रगदेषुचापपरिघान्शूलंभुशुंडींशिरः शंखं
संदधतींकरैस्त्रिनयनांसर्वांगभूषावृतां ॥ नीला
श्मद्युतिमास्यपाददशकांसेवेमहाकालिकाया
मस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभं ॥ १ ॥
ॐनमश्चंडिकायै ॥ ॐऐंमार्कण्डेयउवाच ॥१॥
सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ॥
निशामयतदुत्पत्तिंविस्तराद्गदतोमम ॥ २ ॥
महामायानुभावेनयथामन्वंतराधिपः ॥ सब

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.




भूवमहाभागः सावर्णिस्तनयोरवेः ॥ ३ ॥ स्वा
रोचिषेंतरेपूर्वंचैत्रवंशसमुद्भवः ॥ सुरथोनाम
राजाभूत्समस्तोक्षितिमण्डले ॥ ४ ॥ तस्यपाल
यतः सम्यक्प्रजाः पुत्रानिवौरसान् ॥ बभूवुः
शत्रवोभूपाःकोलाविध्वंसिनस्तदा ॥ ५ ॥ तस्य
तैरभवद्युद्धमतिप्रबलदण्डिनः ॥ न्यूनैरपिसतै
र्युद्धेकोलाविध्वंसिभिर्जितः ॥ ६ ॥ ततःस्वपुर ५६
मायातोनिजदेशाधिपोभवत् ॥ आक्रान्तः स

महाभागस्तैस्तदाप्रबलारिभिः ॥ ७ ॥ अमा
त्यैर्बलिभिर्दुष्टैर्दुर्बलस्यदुरात्मभिः ॥ कोशोबलं
चापहृतंतत्रापिस्वपुरेततः ॥ ८ ॥ ततोमृगया
व्याजेनहृतस्वाम्यःसभूपतिः ॥ एकाकीहयमा
रुह्यजगामगहनंवनं ॥ ९ ॥ सतत्राश्रममद्राक्षी
द्द्विजवर्यस्यमेधसः ॥ प्रशांतश्वापदाकीर्णं मुनि
शिष्योपशोभितं ॥ १० ॥ तस्थौकंचित्सकालंच
मुनिनातेनसत्कृतः ॥ इतश्चेतश्चविचरंस्तस्मि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्मुनिवराश्रमे ॥ ११ ॥ सोऽचिंतयत्तदातत्रम
 मत्वाकृष्टमानसः ॥ १२ ॥ मत्पूर्वैः पालितंपूर्वं
मयाहीनंपुरंहितत् ॥ मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः
पाल्यतेनवा ॥ १३ ॥ नजानेसप्रधानोमेशूरोह
स्तीसदामदः ॥ ममवैरिवशंयातःकान्भोगानु
पलप्स्यते ॥ १४ ॥ येममानुगतानित्यंप्रसादध
नभोजनैः ॥ अनुवृत्तिंध्रुवंतेद्यकुर्वंत्यन्यमहीभृ 
ताम् ॥ १५ ॥ असम्यग्व्ययशीलैस्तैःकुर्वद्भिः

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

सततंव्ययम् ॥ संचितःसोतिदुःखेनक्षयंकोशो
गमिष्यति ॥ १६ ॥ एतच्चान्यच्चसततंचिंतया
मासपार्थिवः ॥ तत्रविप्राश्रमाभ्याशेवैश्यमेकं
ददर्शसः ॥ १७ ॥ सपृष्टस्तेनकस्त्वंभोहेतुश्चाग
मनेऽत्रकः ॥ सशोकइवकस्मात्त्वंदुर्मनाइवल
क्ष्यसे ॥ १८ ॥ इत्याकर्ण्यवचस्तस्यभूपतेःप्रण
योदितम् ॥ प्रत्युवाचसतंवैश्यःप्रश्रयावनतोनृ
पं ॥ १९ ॥ वैश्यउवाच ॥ २० ॥ समाधिर्नामवै

 श्योहमुत्पन्नोधनिनाकुले ॥ पुत्रदारैर्निरस्तश्चध 
 नलोभादसाधुभिः ॥ २१ ॥ विहीनश्चधनैर्दारैः
पुत्रैरादायमेधनम् ॥ वनमभ्यागतोदुःखीनिर
स्तश्चाप्तबन्धुभिः ॥ २२ ॥ सोहंनवेद्मिपुत्राणां
कुशलाकुशलात्मिकाम् ॥ प्रवृत्तिंस्वजनानां
चदाराणांचात्रसंस्थितः ॥ २३ ॥ किंनुतेषागृ
हेक्षेममक्षेमंकिंनुसाप्रतम् ॥ २४ ॥ कथंतेकिं 
नुसद्वृत्तादुर्वृत्ताःकिंनुमेसुताः ॥ २५ ॥ राजो

वाच ॥ २६ ॥ यैर्निरस्तोभवांल्लुब्धैः पुत्रदारा
दिभिर्धनैः ॥ २७ ॥ तेषुकिंभवतः स्नेहमनुब
ध्नातिमानसम् ॥ २८ ॥ वैश्यउवाच ॥ २९ ॥
एवमेतद्यथाप्राहभवानस्मद्गतंवचः ॥ किंकरो
मिनबध्नातिममनिष्ठुरतांमनः ॥३०॥ यैःसन्त्य
ज्यपितृस्नेहंधनलुब्धैर्निराकृतः ॥ पतिस्वजन
हार्दंचहार्दितेष्वेवमेमनः ॥ ३१ ॥ किमेतन्ना
भिजानामिजानन्नपिमहामते ॥ यत्प्रेमप्रवणं

चित्तंविगुणेष्वपिबंधुषु ॥ ३२ ॥ तेषांकृतेमेनिः
श्वासोदौर्मनस्यंचजायते ॥३३॥ करोमिकिंयन्न
मनस्तेष्वप्रीतिषुनिष्ठुरम् ॥ ३४ ॥ मार्कण्डेय
उवाच ॥ ३५ ॥ ततस्तौसहितौविप्रतंमुनिंसमु
पस्थितौ ॥ ३६ ॥ समाधिर्नामवैश्योसौसचपा
र्थिवसत्तमः ॥ ३७ ॥ कृत्वातुतौयथान्यायंय
थार्हंतेनसंविदम् ॥ उपविष्टौकथाःकाश्चिच्चक्र
तुर्वैश्यपार्थिवौ ॥३८॥ राजोवाच ॥३९॥ भगवं

त्वामहंप्रष्टुमिच्छाम्येकं वदस्व तत् ॥ ४० ॥
दुःखाय यन्मे मनसः स्वचित्तायत्ततांविना
॥४१॥ ममत्वं गतराज्यस्य राज्यांगेष्वखिलेष्व
पि ॥ जानतोपियथाज्ञस्यकिमेतन्मुनिसत्तम
॥ ४२ ॥ अयंचनिकृतःपुत्रैर्दारैर्भृत्यैस्तथोज्झि
तः ॥ स्वजनेनचसंत्यक्तस्तेषु हार्दीतथाप्याति
॥४३॥ एवमेषतथाहंचद्वावप्यत्यंतदुःखितौ ॥
दृष्टदोषेपिविषयेममत्वाकृष्टमानसौ ॥ ४४ ॥

तत्किमेतन्महाभागयन्मोहोज्ञानिनोरपि ॥ म
मास्यचभवत्येषा विवेकांधस्यमूढता ॥ ४५ ॥
ऋषिरुवाच ॥ ४६ ॥ ज्ञानमस्तिसमस्तस्यजंतो
र्विषयगोचरे ॥ विषयाश्चमहाभागयांतिचैवंपृ
थक्पृथक् ॥ ४७ ॥ दिवांधाःप्राणिनःकेचिद्रा
त्रावंधास्तथापरे ॥ केचिद्दिवातथारात्रौप्राणि
नस्तुल्यदृष्टयः ॥ ४८ ॥ ज्ञानिनोमनुजाः सत्यं ६०
किंनुतेनहिकेवलम् ॥ यतोहिज्ञानिनःसर्वेपशु

पक्षिमृगादयः ॥ ४९ ॥ ज्ञानंचतन्मनुष्याणांय
त्तेषांमृगपक्षिणाम् ॥ मनुष्याणांचयत्तेषांतुल्य
मन्यत्तथोभयोः ॥ ५० ॥ ज्ञानेपिसतिपश्यैता
न्पतङ्गाञ्छावचंचुषु ॥ कणमोक्षादृतान्मोहा
त्पीड्यमानानपिक्षुधा ॥ ५१ ॥ मानुषामनुज
व्याघ्रसाभिलाषाःसुतान्प्रति ॥ लोभात्प्रत्युप
कारायनन्वेतान्किंनपश्यसि ॥५२॥ तथापिम
मतावर्तेमोहगर्तेनिपातिताः ॥ महामायाप्रभा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





वेणसंसारस्थितिकारिणा ॥५३॥ तन्नात्रविस्म
यःकार्योयोगनिद्राजगत्पतेः ॥ महामायाहरेश्चै
षातयासंमोह्यतेजगत् ॥ ५४ ॥ ज्ञानिनामपि
चेतांसिदेवीभगवतीहिसा ॥ बलादाकृष्यमोहा
यमहामायाप्रयच्छति ॥ ५५ ॥ तयाविसृज्य
तेविश्वंजगदेतच्चराचरम् ॥ सैषाप्रसन्नावरदानृ
णांभवतिमुक्तये ॥ ५६ ॥ साविद्यापरमामुक्ते 
हेतुभूतासनातनी ॥ ५७ ॥ संसारबंधहेतुश्चसै

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

वसर्वेश्वरेश्वरी ॥ ५८ ॥ राजोवाच ॥ ५९ ॥ भ
गवन्काहिसादेवीमहामायेतियांभवान् ॥ ब्रवी
तिकथमुत्पन्नासाकर्मास्याश्चकिंद्विज ॥ ६० ॥
यत्प्रभावाचसादेवीयत्स्वरूपायदुद्भवा ॥ ६१ ॥
तत्सर्वंश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर ॥ ६२ ॥
॥ ऋषिरुवाच ॥ ६३ ॥ ॥ नित्यैवसाजगन्मू
र्तिस्तयासर्वमिदंततम् ॥ ६४ ॥ तथापितत्स
मुत्पत्तिर्बहुधाश्रूयतांमम ॥ ६५ ॥ देवानांकार्य

सिद्ध्यर्थमाविर्भवतिसायदा ॥ उत्पन्नेतितदालो
केसानित्याप्यभिधीयते ॥ ६६ ॥ योगनिद्रांय
दाविष्णुर्जगत्येकार्णवीकृते ॥ आस्तीर्यशेषम
भजत्कल्पांतेभगवान्प्रभुः ॥ ६७ ॥ तदाद्वाव
सुरौ घोरौ विख्यातौ मधुकैटभौ ॥ विष्णुकर्ण
मलोद्भूतौहंतुंब्रह्माणमुद्यतौ ॥ ६८ ॥ सनाभि
कमलेविष्णोःस्थितोब्रह्माप्रजापतिः ॥ दृष्ट्वाता
वसुरौचोग्रौप्रसुप्तंचजनार्दनम् ॥ ६९ ॥ तुष्टा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

वयोगनिद्रांतामेकाग्रहृदय:स्थित: ॥ विबोधना
र्थायहरेर्हरिनेत्रकृतालयाम् ॥ ७० ॥ विश्वेश्वरीं
जगद्धात्रींस्थितिसंहारकारिणीम् ॥ निद्रांभगव
तींविष्णोरतुलांतेजस:प्रभु: ॥ ७१ ॥ ब्रह्मोवा
च ॥ ७२ ॥ त्वंस्वाहात्वंस्वधात्वंहिवषट्कार:
स्वरात्मिका ॥ सुधात्वमक्षरेनित्येत्रिधामात्रा
त्मिकास्थिता ॥ ७३ ॥ अर्धमात्रास्थितानित्या
यानुच्चार्याविशेषत: ॥ त्वमेवसंध्यासावित्री त्वं

स० देवि जननीपरा ॥ ७४ ॥ त्वयैतद्धार्यतेविश्वंत्व अ.१
६३ यैतत्सृज्यतेजगत् ॥ त्वयैतत्पाल्यतेदेवित्वम
त्स्यंतेचसर्वदा ॥ ७५ ॥ विसृष्टौसृष्टिरूपात्वं
स्थितिरूपाचपालने ॥ तथासंहृतिरूपांतेजग
तोस्यजगन्मये ॥ ७६ ॥ महाविद्यामहामाया
महामेधामहास्मृतिः ॥ महामोहाचभवतीम
हादेवीमहेश्वरी ॥ ७७ ॥ प्रकृतिस्त्वंचसर्वस्य ६३
गुणत्रयविभाविनी ॥ कालरात्रिर्महारात्रिर्मोह

रात्रिश्चदारुणा ॥ ७८ ॥ त्वंश्रीस्त्वमीश्वरीत्वं
ह्रीस्त्वंबुद्धिर्बोधलक्षणा ॥ लज्जापुष्टिस्तथातुष्टि
स्त्वंशांतिःक्षांतिरेवच ॥ ७९ ॥ खड्गिनीशूलि
नीघोरागदिनीचक्रिणीतथा ॥ शंखिनीचापि
नीबाणभुशुंडीपरिघायुधा ॥ ८० ॥ सौम्यासौ
म्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणां
परमात्वमेवपरमेश्वरी ॥ ८१ ॥ यच्चकिंचित्क
चिद्वस्तुसदसद्वाखिलात्मिके ॥ तस्यसर्वस्यया

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

शक्तिःसात्वंकिंस्तूयसेमया ॥ ८२ ॥ ययात्वया

जगत्स्रष्टाजगत्पात्यत्तियोजगत् ॥ सोपिनिद्रा
वशंनीतःकस्त्वांस्तोतुमिहेश्वरः ॥ ८३ ॥ विष्णुः
शरीरग्रहणमहमीशानएवच ॥ कारितास्तेय
तोतस्त्वांकःस्तोतुंशक्तिमान्भवेत् ॥ ८४ ॥ सा
त्वमित्थंप्रभावैःस्वैरुदारैर्देविसंस्तुता ॥ मोहयै
तौदुराधर्षावसुरौमधुकैटभौ ॥ ८५ ॥ प्रबोधं 
चजगत्स्वामीनीयतामच्युतोलघु ॥ ८६ ॥ बो

धश्चक्रियतामस्यहंतुमेतौमहासुरौ ॥ ८७ ॥
ऋषिरुवाच ॥ ८८ ॥ एवंस्तुतातदादेवीताम
सीतत्रवेधसा ॥ विष्णोःप्रबोधनार्थायनिहंतुंम
धुकैटभौ ॥ ८९ ॥ नेत्रास्यनासिकाबाहुहृदये
भ्यस्तथोरसः ॥ निर्गम्यदर्शनेतस्थौब्रह्मणोव्य
क्तजन्मनः ॥ ९० ॥ उत्तस्थौचजगन्नाथस्तया
मुक्तोजनार्दनः ॥ एकार्णवेऽहिशयनात्ततःसद
दृशेचतौ ॥ ९१ ॥ मधुकैटभौ दुरात्मानावति

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वीर्यपराक्रमौ ॥ क्रोधरक्तेक्षणावत्तुंब्रह्माणंजनि
 तोद्यमौ ॥ ९२ ॥ समुत्थायततस्ताभ्यांयुयुधे
भगवान्हरिः ॥ पंचवर्षसहस्राणिबाहुप्रहरणोवि
भुः ॥ ९३ ॥ तावप्यतिबलोन्मत्तौमहामाया
विमोहितौ ॥ ९४ ॥ उक्तवंतौवरोस्मत्तोव्रियता
मितिकेशवम् ॥९५॥ श्रीभगवानुवाच ॥९६॥
भवेतामद्य मे तुष्टौ ममवध्यावुभावपि ॥ ९७॥ 
किमन्येनवरेणात्रएतावद्धिवृतंमया ॥ ९८ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

ऋषिरुवाच ॥ ९९ ॥ वंचिताभ्यामितितदास
र्वमापोमयंजगत् ॥ विलोक्यताभ्यांगदितोभ
गवान्कमलेक्षणः ॥ १०० ॥ आवांजहिनयत्रो
र्वीसलिलेनपरिप्लुता ॥ १ ॥ ऋषिरुवाच ॥ २ ॥
तथेत्युक्त्वाभगवताशंखचक्रगदाभृता ॥ कृ
त्वाचक्रेणवैछिन्नेजघनेशिरसीतयोः ॥ ३ ॥ एव
मेषासमुत्पन्नाब्रह्मणासंस्तुतास्वयम् ॥ प्रभावम
स्यादेव्यास्तुभूयः शृणुवदामिते ऐंॐ ॥ १०४ ॥

श्रीमार्कण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमा
हात्म्येप्रथमः ॥१॥ उवाचमंत्राः ॥ १४ ॥ अर्ध
मंत्राः ॥ २४ ॥ श्लोकमंत्राः ॥ ६६ ॥ एवंमंत्राः
॥ १०४ ॥ ॥मध्यमचरितस्य ॥ विष्णुर्ऋषिः ॥
महालक्ष्मीर्देवता ॥ उष्णिक्छंदः ॥ शाकंभरी
शक्तिः ॥ दुर्गाबीजम् ॥ वायुस्तत्त्वं ॥ यजुर्वेदः
स्वरूपं ॥ महालक्ष्मीप्रीत्यर्थंअर्थार्थेजपेविनि ६६
योगः ॥ ध्यानं ॥ अक्षस्रक्प० ॥ ॐह्रींऋषिरुवाच

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ १ ॥ देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा ॥ म
हिषेसुराणामधिपेदेवानांचपुरंदरे ॥ २ ॥ तत्रा
सुरैर्महावीर्यैर्देवसैन्यंपराजितम् ॥ जित्वाचस
कलान्देवानिंद्रोभून्महिषासुरः ॥ ३ ॥ ततःप
राजितादेवाः पद्मयोनिंप्रजापतिम् ॥ पुरस्कृत्य
गतास्तत्रयत्रेशगरुडध्वजौ ॥ ४ ॥ यथावृत्तंत
योस्तद्वन्महिषासुरचेष्टितम् ॥ त्रिदशाःकथ
यामासुर्देवाभिभवविस्तरम् ॥ ५ ॥ सूर्येंद्राग्न्य

 निलेंदूनांयमस्यवरुणस्यच ॥ अन्येषांचाधि 

 कारान्सः स्वयमेवाधितिष्ठति ॥ ६ ॥ स्वर्गान्नि

राकृताःसर्वेतेनदेवगणाभुवि ॥ विचरंतियथा

मर्त्यामहिषेणदुरात्मना ॥ ७ ॥ एतद्वःकथितं

सर्वममरारिविचेष्टितम् ॥ शरणंचप्रपन्नाः

स्मोवधस्तस्यविचिंत्यताम् ॥ ८ ॥ इत्थंनिशम्य

देवानांवचांसिमधुसूदनः ॥ चकारकोपंशंभुश्च 

भ्रुकुटीकुटिलाननौ ॥ ९ ॥ ततोतिकोपपूर्णस्य

चक्रिणोवदनात्ततः ॥ निश्चक्राममहत्तेजो
ब्रह्मणःशंकरस्य च ॥ १० ॥ अन्येषांचैवदेवानां
शक्रादीनांशरीरतः ॥ निर्गतंसुमहत्तेजस्तच्चैक्यं
समगच्छत ॥ ११ ॥ अतीवतेजसःकूटंज्वलंत
मिवपर्वतम् ॥ ददृशुस्तेसुरास्तत्रज्वालाव्याप्त
दिगंतरम् ॥ १२ ॥ अतुलंतत्रतत्तेजःसर्वदेवशरी
रजं ॥ एकस्थंतदभून्नारीव्याप्तलोकत्रयंत्विषा
॥ १३ ॥ यदभूच्छांभवंतेजस्तेनाजायततन्मुख

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



म् ॥ याम्येनचाभवन्केशाबाहवोविष्णुतेजसा
॥ १४ ॥ सौम्येनस्तनयोर्युग्मंमध्यंचैंद्रेणचाभ
वत् ॥ वारुणेनचजंघोरूनितंबस्तेजसाभुवः
॥ १५ ॥ ब्रह्मणस्तेजसापादौतदंगुल्योर्कतेज
सा ॥ वसूनांचकरांगुल्यःकौबेरेणचनासिका
॥ १६ ॥ तस्यास्तुदंताःसंभूताःप्राजापत्येनते
जसा ॥ नयनत्रितयंजज्ञेतथापावकतेजसा
॥ १७ ॥ भ्रुवौचसंध्ययोस्तेजःश्रवणावनिलस्य

च ॥ अन्येषांचैवदेवानांसंभवस्तेजसांशिवा
॥ १८ ॥ ततःसमस्तदेवानांतेजोराशिसमुद्भवा
म् ॥ तांविलोक्यमुदंप्रापुरमरामहिषार्दिताः
॥ १९ ॥ ततोदेवाददुस्तस्यैस्वानिस्वान्यायुधा
निच ॥ शूलंशूलाद्विनिष्कृष्यददौतस्यैपिनाक
धृक् ॥ २० ॥ चक्रंचदत्तवान्कृष्णःसमुत्पाद्य
स्वचक्रतः ॥ शंखंचवरुणःशक्तिंददौतस्यैहुता
शनः ॥ २१ ॥ मारुतोदत्तवांश्चापंबाणपूर्णैतथे

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





षुधी ॥ वज्रामिंद्रःसमुत्पाट्यकुलिशादमराधि
पः ॥ २२ ॥ ददौतस्यैसहस्राक्षोघंटामैरावताद्ग
जात् ॥ कालदंडाद्यमोदंडपाशंचांबुपतिर्ददौ
॥ २३ ॥ प्रजापतिश्चाक्षमालांददौब्रह्माकमंड
लुम् ॥ समस्तरोमकूपेषुनिजरश्मीन्दिवाकरः
॥ २४ ॥ कालश्चदत्तवान्खड्गंतस्यैचर्मचनिर्मल
म् ॥ क्षीरोदश्चामलंहारमजरेचतथांबरे ॥ २५ ॥ ६९
चूडामणिंतथादिव्यंकुंडलेकटकानिच ॥ अर्ध

चंद्रंतथाशुभ्रंकेयूरान्सर्वबाहुषु ॥ २६ ॥ नूपुरौ
विमलौतद्वद्ग्रैवेयकमनुत्तमम् ॥ अंगुलीयक
रत्नानिसमस्तास्वंगुलीषुच ॥ २७ ॥ विश्वकर्मा
ददौतस्यैपरशुंचातिनिर्मलम् ॥ अस्त्राण्यनेकरू
पाणितथाभेद्यंचदंशनम् ॥ २८ ॥ अम्लानपंक
जांमालांशिरस्युरसिचापराम् ॥ अददज्जलधि
स्तस्यैपंकजंचातिशोभनम् ॥ २९ ॥ हिमवान्वाह
नंसिंहंरत्नानिविविधानिच ॥ ददावशून्यंसुरया

स० पानपात्रंधनाधिपः ॥३०॥ शेषश्चसर्वनागेशोम अ.२
७० हामणिविभूषितम् ॥ नागहारंददौतस्मैधत्तेयः
पृथिवीमिमाम् ॥३१॥ अन्यैरपिसुरैर्देवीभूषणै
रायुधैस्तथा ॥ संमानिताननादोच्चैःसाट्टहासंमु
हुर्मुहुः ॥ ३२ ॥ तस्यानादेनघोरेणकृत्स्नमापूरि
तंनभः ॥ अमायतातिमहताप्रतिशब्दोमहान
भूत् ॥ ३३ ॥ चुक्षुभुःसकलालोकास्समुद्राश्च ७०
चकंपिरे ॥ चचालवसुधाचेलुःसकलाश्चमही

धराः ॥ ३४ ॥ जयेतिदेवाश्चमुदातामूचुःसिंह
वाहिनीम् ॥ तुष्टुवुर्मुनयश्चैनांभक्तिनम्रात्ममूर्त
यः ॥३५॥ दृष्ट्वासमस्तंसंक्षुब्धंत्रैलोक्यममरार
यः ॥ सन्नद्धाखिलसैन्यास्तेसमुत्तस्थुरुदायुधाः
॥ ३६ ॥ आःकिमेतदितिक्रोधादाभाष्यमहिषा
सुरः ॥ अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः
॥ ३७ ॥ सददर्शततोदेवींव्याप्तलोकत्रयांत्वि
षा ॥ पादाक्रांत्यानतभुवंकिरीटोल्लिखितांबरा

म् ॥३८॥ क्षोभिताशेषपातालंधनुर्ज्यानिःस्वने
नतां ॥ दिशोभुजसहस्रेण समंताद्व्याप्यसंस्थितां
॥३९॥ ततःप्रववृतेयुद्धंतयादेव्यासुरद्विषाम् ॥
शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगंतरम् ॥ ४० ॥
महिषासुरसेनानीश्चिक्षुराख्योमहासुरः ॥ युयु
धेचामरश्चान्यैश्चतुरंगबलान्वितः ॥४१॥ रथा
नामयुतैःषड्भिरुदग्राख्योमहासुरः ॥ अयु
ध्यतायुतानांचसहस्रेणमहाहनुः ॥४२॥ पंचा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

शद्भिश्चनियुतैरासिलोमामहासुरः ॥ अयुतानां
शतैःषड्भिर्बाष्कलोयुयुधेरणे ॥ ४३ ॥ गजवा
जिसहस्रौघैरनेकैः परिवारितः ॥ वृतोरथानां
कोट्याचयुद्धेतास्मिन्नयुध्यत ॥ ४४ ॥ बिडाला
ख्योयुतानांच पंचाशद्भिरथायुतैः ॥ युयुधेसंयु
गेतत्ररथानांपरिवारितः ॥ ४५ ॥ अन्येचतत्रा
युतशोरथनागहयैर्वृताः ॥ युयुधुःसंयुगेदेव्यास
हतत्रमहासुराः ॥ ४६ ॥ कोटिकोटिसहस्रैस्तुर

थानांदन्तिनांतथा ॥ हयानांचवृतोयुद्धेतत्राभू
 न्महिषासुरः ॥ ४७ ॥ तोमरैर्भिंदिपालैश्चश
क्तिभिर्मुसलैस्तथा ॥ युयुधुःसंयुगेदेव्याखड्गैः
परशुपट्टिशैः ॥ ४८ ॥ केचिच्चचिक्षिपुःशक्तीःके
चित्पाशांस्तथापरे ॥ देवींखड्गप्रहारैस्तुतेतांहं
तुंप्रचक्रमुः ॥ ४९ ॥ सापिदेवीततस्तानिशस्त्रा
ण्यस्त्राणिचण्डिका ॥ लीलयैवप्रचिच्छेदनिज 
शस्त्रास्त्रवर्षिणी ॥ ५० ॥ अनायस्ताननादेवीस्तू

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

यमानासुरर्षिभिः ॥ मुमोचासुरदेहेषुशस्त्राण्य
स्त्राणिचेश्वरी ॥ ५१ ॥ सोपिक्रुद्धोधुतसटोदेव्या
वाहनकेसरी ॥ चचारासुरसैन्येषुवनेष्विवहुता
शनः ॥ ५२ ॥ निःश्वासान्मुमुचेयांश्चयुध्यमा
नारणेम्बिका ॥ तएवसद्यःसंभूतागणाःशतसह
स्रशः ॥ ५३ ॥ युयुधुस्तेपरशुभिर्भिंदिपालासि
पट्टिशैः ॥ नाशयंतोसुरगणान्देवीशक्त्युपबृंहि
ताः ॥ ५४ ॥ अवादयंतपटहान्गणाःशंखांस्त

थापरे ॥ मृदंगांश्चतथैवान्येतस्मिन्युद्धमहोत्स
वे ॥ ५५ ॥ ततोदेवीत्रिशूलेनगदयाशक्तिऋ
ष्टिभिः ॥ खड्गादिभिश्चशतशोनिजघानमहा
सुरान् ॥ ५६ ॥ पातयामासचैवान्यान्घंटास्व
नविमोहितान् ॥ असुरान्भुविपाशेनबध्वाचा
न्यानकर्षयत् ॥ ५७ ॥ केचिद्द्विधाकृतास्तीक्ष्णैः
खड्गपातैस्तथापरे ॥ विपोथितानिपातेनगदया
भुविशेरते ॥ ५८ ॥ वेमुश्चकेचिद्रुधिरंमुसलेन

मृशंहताः ॥ केचिन्निपतिताभूमौभिन्नाःशूले
नवक्षसि ॥ ५९ ॥ निरंतराःशरौघेणकृताःकेचि
द्रणाजिरे ॥ सेनानुकारिणःप्राणान्मुमुचुस्त्रिद
शार्दनाः ॥६०॥ केषांचिद्बाहवश्छिन्नाश्छिन्नग्री
वास्तथापरे ॥ शिरांसिपेतुरन्येषामन्येमध्येवि
दारिताः ॥६१॥ विच्छिन्नजंघास्त्वपरेपेतुरुर्व्यां
महासुराः ॥ एकबाह्वक्षिचरणाःकेचिद्देव्याद्वि
धाकृताः ॥६२॥ छिन्नेपिचान्येशिरसिपतिताः

 पुनरुत्थिताः ॥ ननृतुश्चापरेतत्रयुद्धेतूर्यलयाश्रि 
 ताः ॥ ६३ ॥ कबंधाश्छिन्नशिरसः खड्गशक्त्यृ
ष्टिपाणयः ॥ तिष्ठतिष्ठेतिभाषंतोदेवीमन्येमहा
सुराः ॥ ६४ ॥ पातितैरथनागाश्वैरसुरैश्चवसुं
धरा ॥ अगम्यासाभवत्तत्रयत्राभूत्समहारणः
॥ ६५ ॥ शोणितौघामहानद्यःसद्यस्तत्रप्रसुस्रु
वुः ॥मध्येचासुरसैन्यस्यवारणासुरवाजिनां ६६ 
क्षणेनतन्महासैन्यमसुराणांतथाम्बिका ॥ नि

न्येक्षयंयथावह्निस्तृणदारुमहाचयम् ॥ ६७ ॥
सचसिंहोमहानादमुत्सृजन्धुतकेसरः ॥ शरी
रेभ्योमरारीणामसूनिवविचिन्वति ॥ ६८ ॥ दे
व्यागणैश्चतैस्तत्रकृतंयुद्धंतथासुरैः ॥ यथैषांतु
तुषुर्देवाःपुष्पवृष्टिमुचोदिवि ॥ ६९ ॥ मार्कण्डे
यपुराणेसावर्णिकेमन्वंतरेदेवीमाहात्म्येमहि०
द्वितीयः ॥ २ ॥ ॥ उवाचमंत्राः ॥१॥ श्लोकमं
त्राः ॥ ६८ ॥ एवं ॥६९॥ एवमादितः ॥ १७३ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ऋषिरुवाच ॥ १ ॥ निहन्यमानंतत्सैन्यमवलो
कयमहासुरः ॥ सेनानीश्चिक्षुरः कोपाद्ययौयो
द्धुमथांबिकाम् ॥ २ ॥ सदेवींशरवर्षेणववर्षस
मरेसुरः ॥ यथामेरुगिरेःशृंगं तोयवर्षेणतोयदः
॥ ३ ॥ तस्याछित्त्वाततोदेवी लीलयैवशरोत्क
रान् ॥ जघानतुरगान्बाणैर्यंतारंचैववाजिनाम्
॥ ४ ॥ चिच्छेदचधनुःसद्योध्वजंचातिसमुच्छ्रि
तम् ॥ विव्याधचैवगात्रेषुच्छिन्नधन्वानमाशु

गैः ॥ ५ ॥ सञ्छिन्नधन्वाविरथोहताश्वोहतसा
रथिः ॥ अभ्यधावततांदेवीं खड्गचर्मधरोऽ
सुरः ॥६॥ सिंहमाहत्यखड्गेन तीक्ष्णधारेणमूर्ध्
नि ॥ आजघानभुजेसव्येदेवीमप्यतिवेगवान्
॥ ७ ॥ तस्याःखड्गोभुजंप्राप्य पफालनृपनन्द
न ॥ ततोजग्राहशूलं स कोपादरुणलोचनः
॥८॥ चिक्षेपचततस्तत्तुभद्रकाल्यांमहासुरः ॥
जाज्वल्यमानंतेजोभीरविबिंबमिवांबरात् ।९।

दृष्ट्वातदापतच्छूलंदेवीशूलममुञ्चत। तेनतच्छ
तधानीतंशूलंसचमहासुरः ॥ १० ॥ हतेतस्मि
न्महावीर्ये महिषस्यचमूपतौ ॥ आजगामगजा
रूढश्चामरस्त्रिदशार्दनः ॥ ११ ॥ सोपिशक्तिंमु
मोचाथदेव्यास्तामंबिकाद्रुतम् ॥ हुंकाराभिह
तांभूमौपातयामासनिष्प्रभां ॥ १२ ॥ भग्नांश
क्तिंनिपतितांदृष्ट्वाक्रोधसमन्वितः ॥ चिक्षेपचा
मरःशूलंबाणैस्तदपिसाच्छिनत् ॥ १३ ॥ ततःसिं

हःसमुत्पत्यगजकुंभांतरेस्थितः ॥ बाहुयुद्धेनयु
युधेतेनोच्चैस्त्रिदशारिणा ॥ १४ ॥ युध्यमानौ
ततस्तौतुतस्मान्नागान्महींगतौ ॥ युयुधातेति
संरब्धौप्रहारैरतिदारुणैः ॥ १५ ॥ ततोवेगात्
खमुत्पत्यनिपत्यचमृगारिणा ॥ करप्रहारेणशि
रश्चामरस्यपृथक्कृतं ॥ १६ ॥ उदग्रश्चरणेदेव्या
शिलावृक्षादिभिर्हतः ॥ दंतमुष्टितलैश्चैवकराल
श्चनिपातितः ॥ १७ ॥ देवीक्रुद्धागदापातैश्चू

र्णयामासचोद्धृतम् ॥ बाष्कलंभिंदिपालेनबाणै
स्ताम्रंतथांधकम् ॥१८॥ उग्रास्यमुग्रवीर्यंचतथै
वचमहाहनुं ॥ त्रिनेत्राचत्रिशूलेनजघानपरमे
श्वरी ॥ १९ ॥ बिडालस्यासिनाकायात्पातयामा
सवैशिरः ॥ दुर्धरंदुर्मुखंचोभौशरैर्निन्येयमक्ष
यम् ॥२०॥ एवंसंक्षीयमाणेतुस्वसैन्येमहिषासु
र: ॥ माहिषेणस्वरूपेणत्रासयामासतान्गणान्
॥ २१ ॥ कांश्चित्तुंडप्रहारेण खुरक्षेपैस्तथाप

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

रान् ॥ लांगूलताडितांश्चान्यान् शृंगाभ्यांचवि
दारितान् ॥ २२ ॥ वेगेनकांश्चिदपरान्नादेनभ्र
मणेनच ॥ निःश्वासपवनेनान्यान्पातयामास
भूतले ॥ २३ ॥ निपात्यप्रमथानीकमभ्यधाव
तसोऽसुरः ॥ सिंहंहंतुंमहादेव्याःकोपंचक्रेततो
म्बिका ॥ २४ ॥ सोपिकोपान्महावीर्यःखुरक्षु
ण्णमहीतलः ॥ शृंगाभ्यांपर्वतानुच्चांश्चिक्षेपच
ननादच ॥ २५ ॥ वेगभ्रमणविक्षुण्णामहीतस्य

व्यशीर्यत ॥ लांगूलेनाहतश्चाब्धिःप्लावयामा
ससर्वतः ॥ २६ ॥ धुतशृंगविभिन्नाश्चखंडंखंडं
ययुर्घनाः ॥ श्वासानिलास्ताःशतशो निपेतुर्नभ
सोचलाः ॥ २७ ॥ इतिक्रोधसमाध्मातमापतं
तंमहासुरं ॥ दृष्ट्वासाचंडिकाकोपंतद्वधायतदा
करोत् ॥ २८ ॥ साक्षिप्त्वातस्यवैपाशंतंबबंधम
हासुरं ॥ तत्याजमाहिषंरूपंसोपिबद्धोमहामृधे
॥ २९ ॥ ततःसिंहोभवत्सद्योयावत्तस्याम्बिका

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

शिरः ॥ छिनत्तितावत्पुरुषःखड्गपाणिरदृश्यत
॥ ३० ॥ ततएवाशुपुरुषंदेवीचिच्छेदसायकैः ॥
तंखड्गचर्म्मणासार्धंततःसोभून्महागजः ॥३१॥
करेणचमहासिंहंतंचकर्षजगर्जच ॥ कर्षतस्तु
करंदेवीखड्गेननिरकृंतत ॥३२॥ ततोमहासुरो
भूयोमाहिषंवपुरास्थितः॥ तथैवक्षोभयामासत्रै
लोक्यंसचराचरं॥३३॥ततःक्रुद्धाजगन्माताच
ण्डिकापानमुत्तमम् ॥ पपौपुनःपुनश्चैवजहासा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रुणलोचना ॥ ३४ ॥ ननर्दचासुरःसोपिबलवी
र्यमदोद्धतः ॥ विषाणाभ्यांचचिक्षेपचंडिकांप्र
तिभूधरान् ॥ ३५ ॥ साचतान्प्रहितांस्तेनचूर्ण
यंतीशरोत्करैः ॥ उवाचतंमदोद्धूतमुखरागाकु
लाक्षरम् ॥ ३६ ॥ देव्युवाच ॥ ३७ ॥ गर्जगर्ज
क्षणंमूढमधुयावत्पिबाम्यहं ॥ मयात्वयिहतेत्रै
वगर्जिष्यंत्याशुदेवताः ॥ ३८ ॥ ऋषिरुवाच ॥
॥ ३९ ॥ एवमुक्त्वासमुत्पत्यसारूढातंमहासु

रम् ॥ पादेनाक्रम्यकंठेच शूलेनैनमताडयत्
॥ ४० ॥ ततःसोपिपदाक्रांतस्तयानिजमुखात्त
दा ॥ अर्धनिष्क्रान्तएवासीद्देव्यावीर्येणसंवृतः
। ४१ । अर्धनिष्क्रातएवासौयुध्यमानोमहासुरः
॥ तयामहासिनादेव्याशिरश्छित्त्वानिपातितः
। ४२ ॥ ततोहाहाकृतंसर्वंदैत्यसैन्यंननाशतत् ॥
प्रहर्षंचपरंजग्मुःसकलादेवतागणाः ॥ ४३ ॥ तु
ष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः ॥ जगुर्गं

स० धर्वपतयोननृतुश्चाप्सरोगणाः ॥ ४४ ॥ मार्क अ.४
८० ण्डेयपुराणेसावर्णिकेमन्वंतरे देवीमाहात्म्ये तृ
तीयः ॥ ३ ॥ उवाच ॥ ३ ॥ श्लोक ॥ ४१ ॥
एवं ॥ ४४ ॥ एवमादितः ॥ ४१७ ॥
ऋषिरुवाच ॥ १ ॥ शक्रादयःसुरगणानिहतेति
वीर्येतस्मिन्दुरात्मनिसुरारिबलेचदेव्या ॥ तांतु
ष्टुवुःप्रणतिनम्रशिरोधरांसा वाग्भिःप्रहर्षपुल ८०
कोद्गमचारुदेहाः ॥ २ ॥ देव्यायययाततमिदंजग

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

दात्मशक्त्यानिश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामंबिकामखिलदेवमहर्षिपूज्यांभक्त्यानताः
स्मविदधातुशुभानिसानः ॥३॥ यस्याःप्रभावम
तुलंभगवाननंतो ब्रह्माहरश्चनहिवक्तुमलंबलं
च ॥ साचण्डिकाखिलजगत्परिपालनाय नाशा
यचाशुभभयस्यमतिंकरोतु ॥ ४ ॥ याश्रीःस्वयं
सुकृतिनांभवनेष्वलक्ष्मीःपापात्मनांकृतधियां
हृदयेषुबुद्धिः ॥ श्रद्धासतांकुलजनप्रभवस्यल

स० ज्ञा तांत्वांनताःस्म परिपालय देविविश्वम् अ.४
८१ ॥ ५ ॥ किंवर्णयामतवरूपमचिंत्यमेतत्किंचा
तिवीर्यमसुरक्षयकारिभूरि ॥ किंचाहवेषुचरि
तानितवातियानिसर्वेषुदेव्यसुरदेवगणादिके
षु॥६॥हेतुःसमस्तजगतांत्रिगुणापिदोषैर्नज्ञाय
सेहरिहरादिभिरप्यपारा॥ सर्वाश्रयाखिलमिदं
जगदंशभूतमव्याकृताहि परमाप्रकृतिस्त्वमा ८१
द्या॥ ७॥ यस्याःसमस्तसुरतासमुदीरणेनतृप्तिं

प्रयातिसकलेषुमखेषुदेवि ॥ स्वाहासिवैपितृग
णस्यचतृप्तिहेतुरुच्चार्यसेत्वमतएवजनैः स्वधा
च॥ ८॥यामुक्तिहेतुरविचिंत्यमहाव्रतात्वमभ्य
स्यसेसुनियतेंद्रियतत्वसारैः ॥ मोक्षार्थिभिर्मुनि
भिरस्तसमस्तदोषैर्विद्याऽसिसाभगवतीपरमा
हिदेवी॥९॥शब्दात्मिकासुविमलर्ग्यजुषांनिधा
नमुद्गीथरम्यपदपाठवतांचसाम्नाम् ॥देवित्रयी
भगवतीभवभावनायवार्तासिसर्वजगतांपरमा

तिंहंत्री ॥ १० ॥ मेधासिदेविविदिताखिलशास्त्र
सारादुर्गाऽसिदुर्गभवसागरनौरसंगा ॥ श्रीःकैट
भारिहृदयैककृताधिवासागौरीत्वमेवशशिमौ
लिकृतप्रतिष्ठा ॥ ११ ॥ ईषत्सहासममलंपरिपू
र्णचंद्रबिम्बानुकारिकनकोत्तमकांतिकांतम् ॥
अत्यद्भुतंप्रहृतमात्तरुषातथापिवक्त्रंविलोक्य
सहसामहिषासुरेण ॥१२॥ दृष्ट्वातुदेविकुपितंभ्रु
कुटीकरालमुद्यच्छशांकसदृशच्छवियन्नसद्यः।

प्राणान्मुमोच महिषस्तदतीवचित्रं कैर्जीव्यते
हिकुपितांतकदर्शनेन ॥१३॥ देविप्रसीदपरमा
भवतीभवायसद्योविनाशयति कोपवतीकुला
नि ॥ विज्ञातमेतदधुनैवयदस्तमेतन्नीतंबलंसु
विपुलंमहिषासुरस्य ॥ १४ ॥ तेसंमताजनपदे
षुधनानितेषांतेषांयशांसिनचसीदतिबंधुवर्गः ।
धन्यास्तएवनिभृतात्मजभृत्यदारा येषांसदा
भ्युदयदाभवतीप्रसन्ना ॥१५॥ धर्म्याणिदेविस

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कलानिसदैवकर्माण्यत्याहृतः प्रतिदिनंसुकृती
 करोति ॥ स्वर्गंप्रयातिचततोभवतीप्रसादाल्लो
कत्रयेपिफलदाननुदेवितेन ॥ १६ ॥ दुर्गेस्मृता
हरसिभीतिमशेषजंतोः स्वस्थैःस्मृतामतिमतीव
शुभांददासि ॥ दारिद्र्यदुःखभयहारिणिकात्व
दन्यासर्वोपकारकरणायसदार्द्रचित्ता ॥ १७ ॥
एभिर्हतैर्जगदुपैतिसुखंतथैतेकुर्वंतुनामनरका 
यचिरायपापं ॥ संग्राममृत्युमधिगम्यदिवंप्रयां

तुमत्वेतिनूनमहितान्विनिहंसिदेवि ॥ १८ ॥ दृ
ष्ट्वैवकिंनभवतीप्रकरोतिभस्मसर्वासुरानरिषुय
त्प्रहिणोषिशस्त्रं ॥ लोकान्प्रयान्तुरिपवोपि
हिशस्त्रपूता इत्थंमतिर्भवतितेष्वहितेषुसाध्वी
॥ १९ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैःशू
लाग्रकांतिनिवहेनदृशोसुराणां ॥ यन्नागतावि
लयमंशुमदिंदुखंडयोग्याननं तवविलोकयतां
तदेतत्॥२०॥दुर्वृत्तवृत्तशमनंतवदेविशीलंरू

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





पंतथैतदविचिंत्यमतुल्यमन्यैः ॥ वीर्यंचहंतृह
तदेवपराक्रमाणांवैरिष्वपिप्रकटितैवदयात्वये
त्थम् ॥ २१॥ केनोपमाभवतुतेस्यपराक्रमस्यरू
पंचशत्रुभयकार्यतिहारिकुत्र ॥ चित्तेकृपासमर
निष्ठुरताचदृष्टा त्वय्येवदेवि वरदेभुवनत्रयेऽपि
॥ २२ ॥ त्रैलोक्यमेतदखिलंरिपुनाशनेनत्रातं
त्वयासमरमूर्धनितेपिहत्वा ॥ नीतादिवंरिपुग
णाभयमप्यपास्तमस्माकमुन्मदसुरारिभवंन

मस्ते ॥ २३ ॥ शूलेनपाहिनोदेविपाहिखङ्गेन
चाम्बिके ॥ घण्टास्वनेनन:पाहि चापज्यानिः
स्वनेनच ॥ २४ ॥ प्राच्यांरक्षप्रतीच्यांचचण्डि
केरक्षदक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांत
थेश्वरि ॥ २५ ॥ सौम्यानियानिरूपाणित्रैलो
क्येविचरंतिते ॥ यानिचात्यंतघोराणितैरक्षा
स्मांस्तथाभुवम् ॥ २६ ॥ खङ्गशूलगदादीनि
यानिचास्त्राणितेम्बिके ॥ करपल्लवसंगीनितैरै

स० स्मान्रक्षसर्वतः ॥ २७ ॥ ऋषिरुवाच ॥ २८ ॥ अ.४
८५ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नंदनोद्भवैः ॥ अ-
र्चिताजगतांधात्रीतथागंधानुलेपनैः ॥ २९ ॥
भक्त्यासमस्तैस्त्रिदशैर्दिव्यैर्धूपैःसुधूपिता ॥ प्रा
हप्रसादसुमुखीसमस्तान्प्रणतान्सुरान् ॥ ३० ॥
देव्युवाच ॥ ३१ ॥ व्रियतांत्रिदशाःसर्वे यद
स्मत्तोऽभिवांछितम् ॥ ३२ ॥ देवाऊचुः ॥ ३३ ॥ ८५
भगवत्या कृतं सर्वं न किंचिदवशिष्यते ॥ य

दयंनिहतःशत्रुरस्माकंमहिषासुरः ॥ ३४ ॥ य
दिचापिवरोदेयस्त्वयास्माकंमहेश्वरि ॥ संस्मृ
तासंस्मृता त्वं नो हिंसेथाः परमापदः ॥ ३५ ॥
यश्चमर्त्यःस्तवैरेभिस्त्वांस्तोष्यत्यमलानने ॥
तस्यवित्तार्द्धिविभवैर्धनदारादिसंपदाम् ॥ ३६ ॥
वृद्धयेस्मत्प्रसन्नात्वंभवेथाःसर्वदाम्बिके॥३७॥
ऋषिरुवाच ॥ ३८ ॥ इतिप्रसादितादेवैर्जगतो
र्थेंतथात्मनः ॥ तथेत्युक्त्वाभद्रकालीबभूवांत

 हिंतानृप ॥ ३९ ॥ इत्येतत्कथितंभूपसंभूतासा 
 यथापुरा ॥ देवीदेवशरीरेभ्योजगत्त्रयहितैषि
णी ॥ ४० ॥ पुनश्चगौरीदेहात्सासमुद्भूतायथा
भवत् ॥ वधायदुष्टदैत्यानांतथाशुंभनिशुंभयोः
॥ ४१ ॥ रक्षणायचलोकानां देवानामुपकारि
णी ॥ तच्छृणुष्वमयाख्यातं यथावत्कथयामि
ते ॥ ह्रीं ॐ ॥ ४२ ॥ श्रीमार्कंडेयपुराणे सावर्णि 
केमन्वंतरेदेवीमाहात्म्ये शक्रादिस्तुतिर्नामच

तुर्थः ॥४॥ उवाचमंत्राः ॥५॥ अर्धमंत्राः ॥२॥ श्लोकमंत्राः ॥ ३५ ॥ एवं ॥ ४२ ॥ एवमादितः ॥ २५९ ॥

उत्तमचरितस्य रुद्रऋषिः ॥ महासरस्वतीदेवता ॥ अनुष्टुप्छंदः ॥ भीमाशक्तिः ॥ भ्रामरी बीजं ॥ सूर्यस्तत्त्वं ॥ सामवेदःस्वरूपं ॥ महासरस्वतीप्रीत्यर्थंकामार्थेजपेविनियोगः ॥ ध्यानं॥ घंटाशूल० ॥ ॐक्लीं ऋषिरुवाच ॥ १ ॥ पुराशुं

 भनिशुंभाभ्यामसुराभ्यांशचीपतेः ॥ त्रैलोक्यं 
 यज्ञभागाश्चहृतामद्बलाश्रयात् ॥ २ ॥ तावेवसू
र्यतांतद्वदधिकारंतथैंदवम् ॥ कौबेरमथयाम्यं
चचक्रातेवरुणस्यच ॥ ३ ॥ तावेवपवनर्द्धिंच
चक्रतुर्वह्निकर्मच ॥ ततोदेवाविनिर्धूताभ्रष्टरा
ज्याःपराजिताः ॥ ४ ॥ हृताधिकारास्त्रिदशा
स्ताभ्यांसर्वैनिराकृताः ॥ महासुराभ्यांतांदेवीं 
संस्मरंत्यपराजिताम् ॥ ५ ॥ तयास्माकंवरोद

त्तोयथापत्सुस्मृताखिला: ॥ भवतांनाशयि
ष्यामितत्क्षणात्परमापद: ॥ ६ ॥ इतिकृत्वाम
तिंदेवाहिमवंतंनगेश्वरम् ॥ जग्मुस्तत्रततोदेवीं
विष्णुमायांप्रतुष्टुवु: ॥ ७ ॥ देवाऊचु: ॥ ८ ॥
नमोदेव्यैमहादेव्यै शिवायै सततंनम: ॥ नम:
प्रकृत्यैभद्रायै नियता: प्रणता: स्म ताम् ॥ ९ ॥
रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनम: ॥ ज्यो
त्स्नायैचेंदुरूपिण्यै सुखायैसततंनम: ॥ १० ॥

स० कल्याण्यैप्रणतामृद्ध्यै सिद्ध्यैकूर्म्यैनमोनमः ॥ अ.५
८८ नैर्ऋत्यैभूभृतांलक्ष्म्यै शर्वाण्यै ते नमोनमः
॥ ११ ॥ दुर्गायैदुर्गपारायै सारायैसर्वकारिण्यै ॥
ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः ॥ १२ ॥
अतिसौम्यातिरौद्रायैनतास्तस्यैनमोनमः ॥ न
मोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥ १३ ॥
यादेवीसर्वभूतेषुविष्णुमायेतिशब्दिता ॥ नम ८८
स्तस्यै नमोनमः ॥१४॥ यादेवी० विष्णुमा० न

मस्तस्यैनमोनमः ॥ १५ ॥ याद० विष्णु० नम
स्तस्यै नमोनमः ॥ १६ ॥ यादेवीसर्वभूतेषुचेत
नेत्यभिधीयते ॥ नमस्तस्यै० ॥ १७॥ या० चे०
नमस्तस्यै०नमो० ॥ १८ ॥ या० चेत०नमस्तस्यै
नमोनमः ॥ १९ ॥ यादेवीसर्वभूतेषुबुद्धिरूपे
णसंस्थिता ॥ नमस्तस्यै०॥ २० ॥ या०बुद्धि० ॥
नमस्तस्यै० ॥२१॥ या० बुद्धि० नमस्तस्यैनमो०
॥२२॥ यादेवीसर्वभूतेषुनिद्रारूपेणसंस्थिता ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० नमस्तस्यै० ॥ २३ ॥ या० निद्रा० नमस्तस्यै० ॥ अ.५
८९ ॥२४॥ या० नि०नमस्तस्यैनमोनमः ॥ २५ ॥
यादेवीसर्वभूतेषुक्षुधारूपेणसंस्थिता ॥ नमस्त
स्यै० ॥ २६ ॥ या०क्षुधा० नमस्तस्यै० ॥२७॥
या०क्षुधा०नमस्तस्यैनमोनमः ॥ २८ ॥ यादेवी
सर्वभूतेषुछायारूपेणसंस्थिता ॥ नमस्तस्यै० ॥
॥ २९ ॥ या०छा०नमस्तस्यै० ॥३०॥ या० छा० ८९
नमस्तस्यैनमोनमः ॥ ३१ ॥ यादेवीसर्वभूतेषु

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

शक्तिरूपेणसंस्थिता ॥ नमस्तस्यै० ॥ ३२ ॥
या०श०नमस्तस्यै० ॥ ३३ ॥ या०श०नमस्तस्यैन
मोनमः ॥ ३४ ॥ यादेवीसर्वभूतेषुतृष्णारूपे
णसंस्थिता ॥ नमस्तस्यै० ॥ ३५ ॥ यादे०तृष्णा०
नमस्तस्यै० ॥ ३६ ॥ या० तृष्णा०नमस्तस्यैनमो
नमः ॥ ३७ ॥ यादेवीसर्वभूतेषुक्षांतिरूपेणसं
स्थिता ॥ नमस्तस्यै० ॥ ३८ ॥ या०क्षां०नमस्त
स्यै० ॥ ३९ ॥ या०क्षांति० नमस्तस्यैनमोनमः ॥

स० ॥४०॥ यादेवीसर्वभूतेषुजातिरूपेणसंस्थिता॥ अ.५
९० नमस्तस्यै० ॥ ४१ ॥ या० जाति०नमस्तस्यै०
॥४२॥ या०जा०नमस्तस्यैनमोनमः ॥ ४३ ॥
यादेवीसर्वभूतेषुलज्जारूपेणसंस्थिता ॥ नमस्त
स्यै० ॥ ४४ ॥ या० लज्जा० नमस्तस्यै० ॥ ४५ ॥
या०लज्जा०नमस्तस्यैनमोनमः ॥ ४६ ॥ यादे
वीसर्वभूतेषुशांतिरूपेणसंस्थिता ॥ नमस्तस्यै० ९०
॥४७॥ या०शांति०नमस्तस्यै० ॥४८॥ या०

शांति॰नमस्तस्यैनमोनमः ॥ ४९ ॥ यादेवीसर्व
भूतेषुश्रद्धारूपेणसंस्थिता ॥ नमस्तस्यै॰ ॥
॥ ५० ॥ या॰ श्रद्धा॰नमस्तस्यै॰ ॥ ५१ ॥ या॰
श्रद्धा॰नमस्तस्यैनमोनमः ॥ ५२ ॥ यादेवीसर्वभू
तेषुकांतिरूपेणसंस्थिता ॥ नमस्तस्यै॰ ॥ ५३ ॥
या॰कां॰नमस्तस्यै॰ ॥ ५४ ॥ या॰कां॰ नमस्त
स्यैनमोनमः ॥ ५५ ॥ यादेवीसर्वभूतेषुलक्ष्मी
रूपेणसंस्थिता ॥ नमस्तस्यै॰ ॥ ५६ ॥ यादे॰

ल०नमस्तस्यै० ॥ ५७ ॥ या०ल०नमस्तस्यैन
मोनमः ॥ ५८ ॥ यादेवीसर्वभूतेषुवृत्तिरूपेण
संस्थिता ॥ नमस्तस्यै० ॥ ५९ ॥ या०वृ०नम
स्तस्यै० ॥ ६० ॥ या०वृ०नमस्तस्यैनमोनमः ॥
॥ ६१ ॥ यादेवीसर्वभूतेषु स्मृतिरूपेणसंस्थि
ता ॥ नमस्तस्यै० ॥ ६२ ॥ या०स्मृ०नमस्तस्यै०
॥ ६३ ॥ या०स्मृ०नमस्तस्यैनमोनमः ॥ ६४ ॥
यादेवीसर्वभूतेषुदयारूपेणसंस्थिता ॥ नमस्त

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स्यै० ॥ ६५ ॥ या० द० नमस्तस्यै० ॥ ६६ ॥ या० द० नमस्तस्यैनमोनमः ॥ ६७ ॥ यादेवीसर्वभूतेषुतुष्टिरूपेणसंस्थिता ॥ नमस्तस्यै० ॥ ६८ ॥ या० तु० नमस्तस्यै० ॥ ६९ ॥ या० तु० नमस्तस्यै नमोनमः ॥ ७० ॥ यादेवीसर्वभूतेषुमातृरूपेणसंस्थिता ॥ नमस्तस्यै० ॥ ७१ ॥ या० मा० नमस्तस्यै० ॥ ७२ ॥ या० मा० नमस्तस्यैनमोनमः ॥ ७३ ॥ यादेवीसर्वभूतेषु भ्रांतिरूपेणसं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





स्थिता ॥ नमस्तस्यैनमोनमः ॥ ७४ ॥ यादे
वी० भ्रांति० नमस्तस्यैनमोनमः ॥ ७५ ॥ या
देवी० भ्रांति० नमस्तस्यैनमोनमः ॥७६॥ इंद्रि
याणामधिष्ठात्रीभूतानांचाखिलेषुया ॥ भूते
षुसततंतस्यैव्याप्त्यैदेव्यैनमोनमः ॥ ७७ ॥
चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिताजगत् ॥
नमस्तस्यैनमोनमः ॥ ७८ ॥ चितिरूपेण० न
मस्तस्यैनमोनमः ॥ ७९ ॥ चितिरूपेण० न

मस्तस्यैनमोनमः ॥ ८० ॥ स्तुतासुरैःपूर्वमभी
ष्टसंश्रयात्तथासुरेंद्रेणदिनेषुसेविता ॥ करोतुसा
नः शुभहेतुरीश्वरीशुभानिभद्राण्यभिहंतुचाप
दः॥८१॥यासांप्रतंचोद्धतदैत्यतापितैरस्माभि
रीशाचसुरैर्नमस्यते ॥ याचस्मृतातत्क्षणमेव
हन्तिनःसर्वापदोभक्तिविनम्रमूर्तिभिः ॥८२॥
ऋषिरुवाच ॥ ८३ ॥ एवंस्तवाभियुक्तानांदेवा
नांतत्रपार्वती ॥ स्नातुमभ्याययौतोयेजाह्नव्या

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नृपनंदन ॥ ८४ ॥ साब्रवीत्तान्सुरान्सुभ्रूर्भव
द्भिःस्तूयतेत्रका ॥ शरीरकोशतश्चास्याः समु
द्भूताब्रवीच्छिवा ॥ ८५ ॥ स्तोत्रंममैतत्क्रियते
शुंभदैत्यनिराकृतैः ॥ देवैःसमेतैःसमरेनिशुंभे
नपराजितैः ॥ ८६ ॥ शरीरकोशाद्यत्तस्याःपा
र्वत्यानिःसृताम्बिका ॥ कौशिकीतिसमस्तेषुत
तो लोकेषु गीयते ॥ ८७ ॥ तस्यांविनिर्गतायां ९३
तुकृष्णाभूत्सापिपार्वती ॥ कालिकेतिसमा

ख्याताहिमाचलकृताश्रया ॥ ८८ ॥ ततोम्बि
कांपरंरूपंबिभ्राणांसुमनोहरं ॥ ददर्शचण्डोमु
ण्डश्चभृत्यौशुंभनिशुंभयोः ॥ ८९ ॥ ताभ्यांशुं
भायचाख्यातासातीवसुमनोहरा ॥ काप्यास्ते
स्त्रीमहाराजभासयंतीहिमाचलम् ॥ ९० ॥
नैवतादृक्क्वचिद्रूपंदृष्टंकेनचिदुत्तमम् ॥ ज्ञाय
तांकाप्यसौदेवीगृह्यतांचासुरेश्वर ॥ ९१ ॥ स्त्री
रत्नमतिचार्वंगीद्योतयंतीदिशस्त्विषा ॥ सातु

तिष्ठतिदैत्येंद्रतांभवान्द्रष्टुमर्हति ॥ ९२ ॥ या
निरत्नानिमणयोगजाश्वादीनिवैप्रभो ॥ त्रैलो
क्येतुसमस्तानिसांप्रतंभांतितेगृहे ॥ ९३ ॥ ऐ
रावतःसमानीतोगजरत्नंपुरन्दरात् ॥ पारिजा
ततरुश्चायं तथैवोच्चैःश्रवाहयः ॥ ९४ ॥ विमा
नंहंससंयुक्तमेतत्तिष्ठतितेंगणे ॥ रत्नभूतमिहा
नीतंयदासीद्वेधसोद्भुतम् ॥ ९५ ॥ निधिरेष
महापद्मःसमानीतोधनेश्वरात् ॥ किंजल्किनीं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

ददौचाब्धिर्मालाममम्लानपंकजाम् ॥ १६ ॥ छ
त्रंतेवारुणंगेहेकांचनस्रावितिष्ठति ॥ तथायंस्यं
दनवरोयःपुरासीत्प्रजापतेः ॥ १७ ॥ मृत्योरु
त्क्रांतिदानामशक्तिरीशत्वयाहृता ॥ पाशःस
लिलराजस्यभ्रातुस्तवपरिग्रहे ॥ १८ ॥ निशुंभ
स्याब्धिजाताश्चसमस्तारत्नजातयः ॥ वह्निरपि
ददौतुभ्यमग्निशौचेचवाससी ॥ १९ ॥ एवंदै
त्येंद्ररत्नानिसमस्तान्याहृतानिते ॥ स्त्रीरत्नमेषा

स० कल्याणीत्वयाकस्मान्नगृह्यते ॥१००॥ ऋषिरु
९५ वाच ॥ १ ॥ निशम्येतिवचःशुंभःसतदाचंडमुं
डयोः ॥ प्रेषयामाससुग्रीवंदूतंदेव्यामहासुरम्
॥ २ ॥ इतिचेतिचवक्तव्यासागत्वावचनान्म
म ॥ यथाचाभ्येतिसंप्रीत्या तथाकार्यंत्वयालघु
॥ ३ ॥ सतत्रगत्वायत्रास्तेशैलोद्देशेतिशोभने ॥
तांचदेवींततः प्राह श्लक्ष्णंमधुरयागिरा ॥ ४ ॥ ९५
दूतउवाच ॥ ५ ॥ देविदैत्येश्वरःशुंभस्त्रैलोक्ये

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

परमेश्वरः ॥ दूतोहंप्रेषितस्तेनत्वत्सकाशमिहा
गतः ॥ ६ ॥ अव्याहताज्ञःसर्वासुयःसदादेवयो
निषु ॥ निर्जिताखिलदैत्यारिःसयदाहशृणुष्व
तत् ॥ ७ ॥ ममत्रैलोक्यमखिलंममदेवावशा
नुगाः ॥ यज्ञभागानहंसर्वानुपाश्नामिपृथक्पृ
थक् ॥ ८ ॥ त्रैलोक्येवररत्नानि ममवश्यान्य
शेषतः॥तथैवगजरत्नंचहृतंदेवेंद्रवाहनम् ॥९॥
क्षीरोदमथनोद्भूतमश्वरत्नंममामरैः ॥ उच्चैःश्र

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० वससंज्ञंतत्प्रणिपत्यसमर्पितम् ॥ ११० ॥ यानि अ.५
९६ चान्यानिदेवेषुगंधर्वेषूरगेषुच ॥ रत्नभूतानिभू
तानितानिमय्येवशोभने ॥ ११ ॥ स्त्रीरत्नभूतां
त्वांदेविलोकेमन्यामहेवयम् ॥ सात्वमस्मानु
पागच्छयतोरत्नभुजोवयम् ॥ १२ ॥ मांवाम
मानुजंवापिनिशुंभमुरुविक्रमम् ॥ भजत्वंचं
चलापांगिरत्नभूतासिवैयतः ॥ १३ ॥ परमैश्वर्य ९६
मतुलंप्राप्स्यसेमत्परिग्रहात् ॥ एतद्बुद्ध्यासमा

लोच्यमत्परिग्रहताव्रज ॥ १४ ॥ ऋषिरुवाच ॥
॥ १५ ॥ इत्युक्तासातदादेवीगंभीरांतःस्मिता
जगौ ॥ दुर्गाभगवतीभद्रा ययेदंधार्यतेजगत्
॥ १६ ॥ देव्युवाच ॥ १७ ॥ सत्यमुक्तंत्वयाना
त्रमिथ्याकिंचित्त्वयोदितम् ॥ त्रैलोक्याधिप
तिःशुंभोनिशुंभश्चापिताद्दशः ॥ १८ ॥ किंत्व
त्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथम् ॥ श्रूय
तामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ॥ १९ ॥

योमांजयतिसंग्रामेयोमेदर्पंव्यपोहति ॥ योमे
प्रतिबलोलोके समेभर्ताभविष्यति ॥ १२० ॥
तदागच्छतुशुंभोत्रनिशुंभोवामहाबलः ॥ मां
जित्वाकिंचिरेणात्रपाणिंगृह्णातुमेलघु ॥ २१ ॥
दूतउवाच ॥ २२॥ अवलिप्तासिमैवंत्वं देविब्रू
हिममाग्रतः ॥ त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुंभ
निशुंभयोः ॥ २३ ॥ अन्येषामपिदैत्यानांसर्वेदे ९७
वानवैयुधि ॥ तिष्ठंतिसंमुखेदेविकिंपुनःस्त्रीत्वमे

किका ॥ २४ ॥ इंद्राद्याःसकलादेवास्तस्थुर्यें
षानसंयुगे ॥ शुंभादीनांकथंतेषांस्त्रीप्रयास्यसि
संमुखम् ॥ २५ ॥ सात्वंगच्छमयैवोक्तापार्श्वंशुं
भनिशुंभयोः ॥ केशाकर्षणनिर्धूतगौरवामाग
मिष्यसि ॥ २६ ॥ देव्युवाच ॥ २७ ॥ एवमे
तद्बलीशुंभोनिशुंभश्चापिताहृशः ॥ किंकरोमि
प्रतिज्ञामेयदनालोचितापुरा ॥ २८ ॥ सत्वंगच्छ
मयोक्तंतेयदेतत्सर्वमादृतः ॥ तदाचक्ष्वासुरेंद्रा

यसचयुक्तंकरोतुयत् ॥ १२९ ॥ मार्कंडेयपुरा
९८ णे सावर्णिकेमन्वंतरेदेवीमाहात्म्ये देव्यादूत
संवादोनामपंचमः ॥ ५ ॥ उवाच ॥ १ ॥ त्रि
पान्मंत्राः ॥ ६६ ॥ श्लोकमंत्राः ॥ ५४ ॥ एवं
॥१२९॥ एवमादितः ॥३८८॥ ॥ ऋषिरुवा
च ॥ १ ॥ इत्याकर्ण्यवचोदेव्याः सदूतोऽमर्षपू
रितः ॥ समाचष्टसमागम्यदैत्यराजायविस्तरा ९८
त् ॥ २ ॥ तस्यदूतस्यतद्वाक्यमाकर्ण्यासुरराट्

ततः ॥ सक्रोधःप्राहदैत्यानामाधिपंधूम्रलोचनं
॥ ३ ॥ हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः ॥
तामानयबलाद्दुष्टांकेशाकर्षणविह्वलाम् ॥ ४ ॥
तत्परित्राणदःकश्चिद्यदिवोत्तिष्ठतेपरः ॥ सहं
तव्योऽमरोवापियक्षोगंधर्वएववा ॥ ५ ॥ ऋषि
रुवाच ॥ ६ ॥ तेनाज्ञप्तस्ततःशीघ्रंसदैत्योधूम्र
लोचनः ॥ वृतःषष्ठ्यासहस्राणामसुराणांद्रुतंय
यौ ॥ ७ ॥ सदृष्ट्वातांततोदेवींतुहिनाचलसंस्थि

स० ताम् ॥ जगादोच्चैःप्रयाहीति मूलंशुंभनिशुंभ
९९ योः ॥ ८ ॥ नचेत्प्रीत्याद्यभवतीमद्भर्तारमुपै
ष्यति ॥ ततोबलान्नयाम्येषकेशाकर्षणविह्वला
म् ॥ ९ ॥ देव्युवाच ॥ १० ॥ दैत्येश्वरेणप्रहि
तोबलवान्बलसंवृतः ॥ बलान्नयसिमामेवंत
तःकिंतेकरोम्यहम् ॥ ११ ॥ ऋषिरुवाच ॥ १२ ॥
इत्युक्तःसोभ्यधावत्तामसुरोधूम्रलोचनः ॥ हुं ९९
कारेणैवतंभस्म साचकारांबिकातदा ॥ १३ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

अथक्रुद्धंमहासैन्यमसुराणांतथाम्बिका ॥ वव
र्षसायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः ॥ १४ ॥
ततोधुतसटःकोपात्कृत्वानादंसुभैरवम् ॥ पपा
तासुरसेनायांसिंहोदेव्याःस्ववाहनः ॥१५॥ कां
श्चित्करप्रहारेणदैत्यानास्येनचापरान् ॥ आक्रां
त्याचाधरेणान्यान्जघानसमहासुरान् ॥ १६ ॥
केषांचित्पाटयामास नखैःकोष्ठानिकेसरी ॥ त
थातलप्रहारेणशिरांसिकृतवान्पृथक् ॥ १७ ॥

विच्छिन्नबाहुशिरसःकृतास्तेनतथापरे ॥ पपौ
चरुधिरंकोष्ठादन्येषांधुतकेसरः ॥ १८ ॥ क्षणे
नतद्बलंसर्वंक्षयंनीतंमहात्मना ॥ तेनकेसरिणा
देव्यावाहनेनातिकोपिना ॥ १९ ॥ श्रुत्वातम
सुरंदेव्यानिहतंधूम्रलोचनम् ॥ बलंचक्षयितंकृ
त्स्नंदेवीकेसरिणाततः ॥ २० ॥ चुकोपदैत्याधि
पतिः शुंभःप्रस्फुरिताधरः ॥ आज्ञापयामास
चतौचंडमुंडौमहासुरौ ॥ २१ ॥ हेचंडहेमुंडब

लैर्बहुभिःपरिवारितौ ॥ तत्रगच्छतगत्वाचसा
समानीयतांलघु ॥ २२ ॥ केशेष्वाकृष्यबद्ध्वा
वा यदि वः संशयोयुधि ॥ तदाशेषायुधैःसर्वैर
सुरैर्विनिहन्यतां ॥ २३ ॥ तस्यांहतायांदुष्टायां
सिंहेचविनिपातिते ॥ शीघ्रमागम्यतांबद्ध्वागृ
हीत्वातामथांबिकाम् ॥ २४ ॥ मार्कण्डेयपुरा
णेसावर्णिकेमन्वंतरेदेवीमाहात्म्ये षष्ठः ॥ ६ ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उवाच ॥४॥ अर्ध ॥ ० ॥ श्लोकमंत्राः ॥ २० ॥
 एवं ॥ २४ ॥ एवमादितः ॥ ४१२ ॥
ऋषिरुवाच ॥ १ ॥ आज्ञप्तास्तेततोदैत्याश्चंडमु
डपुरोगमाः ॥ चतुरंगबलोपेतायययुरभ्युद्यतायु
धाः ॥ २ ॥ ददृशुस्तेततोदेवीमीषद्धासांव्यव
स्थिताम् ॥ सिंहस्योपरिशैलेंद्रशृंगेमहतिकांच
ने ॥ ३ ॥ तेदृष्ट्वातांसमादातुमुद्यमंचक्रुरुद्यताः 
॥ आकृष्टचापासिधरास्तथान्येतत्समीपगाः

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ ४ ॥ ततःकोपंचकारोच्चैरंबिकातानरीन्प्रति
॥ कोपेनचास्यावदनंमषीवर्णमभूत्तदा ॥ ५ ॥
भ्रुकुटीकुटिलात्तस्याललाटफलकाद्द्रुतं ॥ का
लीकरालवदनाविनिष्क्रांतासिपाशिनी ॥ ६ ॥
विचित्रखट्वांगधरानरमालाविभूषणा ॥ द्वीपि
चर्मपरीधानाशुष्कमांसातिभैरवा ॥ ७ ॥ अ
तिविस्तारवदनाजिह्वाललनभीषणा ॥ निम
ग्नारक्तनयनानादापूरितदिङ्मुखा ॥ ८ ॥ सा

वेगेनाभिपतिताघातयन्तीमहासुरान् ॥ सैन्ये
तत्रसुरारीणामभक्षयततद्बलम् ॥ ९ ॥ पार्ष्णि
ग्राहांकुशग्राहयोधघंटासमन्वितान् ॥ समादा
यैकहस्तेनमुखेचिक्षेपवारणान् ॥ १० ॥ तथै
वयोधंतुरगैरथंसारथिनासह ॥ निक्षिप्यवक्रेद
शनैश्चर्वयंत्यतिभैरवम् ॥ ११ ॥ एकंजग्राहकेशे
षुग्रीवायामथचापरम् ॥ पादेनाक्रम्यचैवान्य
मुरसान्यमपोथयत् ॥ १२ ॥ तैर्मुक्तानिचशस्त्रा

णिमहास्त्राणितथासुरैः ॥ मुखेनजग्राहरुषादश
नैर्मथितान्यपि ॥१३॥ बलिनांतद्बलंसर्वमसुरा
णांदुरात्मनाम् ॥ ममर्दाभक्षयच्चान्यानन्यांश्चा
ताडयत्तदा ॥ १४ ॥ असिनानिहताःकेचित्के
चित्खट्वांगताडिताः ॥ जग्मुर्विनाशमसुरादंता
ग्राभिहतास्तथा ॥१५॥ क्षणेनतद्बलंसर्वमसुरा
णांनिपातितम्॥दृष्ट्वाचंडोभिदुद्रावतांकालीम
तिभीषणां ॥१६॥ शरवर्षैर्महाभीमैर्भीमाक्षींतां

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





महासुरः ॥ छादयामासचक्रैश्चमुंडःक्षिप्तैःसह
 स्रशः ॥ १७ ॥ तानिचक्राण्यनेकानिविशमाना
नितन्मुखम् ॥ बभुर्यथार्कबिंबानिसुबहूनिघनो
दरम् ॥ १८ ॥ ततोजहासातिरुषाभीमंभैरवना
दिनी ॥ कालीकरालवदनादुर्दर्शदशनोज्ज्वला
॥ १९ ॥ उत्थायचमहासिंहं देवीचंडमधावत
॥ गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाच्छिनत् 
॥ २० ॥ अथमुंडोभ्यधावत्तां दृष्ट्वाचंडंनिपाति

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

तम् ॥ तमप्यपातयद्भूमौसाखड्गाभिहतंरुषा
॥२१॥हतशेषंततःसैन्यं दृष्ट्वाचंडंनिपातितम्
॥ मुंडंचसुमहावीर्यं दिशोभेजेभयातुरम् ॥
॥ २२ ॥ शिरश्चंडस्यकालीचगृहीत्वामुण्डमेव
च ॥ प्राहप्रचंडाट्टहासमिश्रमभ्येत्यचंडिकाम्
॥२३॥मयातवात्रोपहृतौचण्डमुण्डौमहापशू
॥ युद्धयज्ञेस्वयंशुंभंनिशुंभंचहनिष्यसि ॥२४॥
ऋषिरुवाच ॥ २५ ॥ तावानीतौततोदृष्ट्वाचंड

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मुंडौमहासुरौ ॥ उवाचकालींकल्याणी ललि
तंचंडिकावचः ॥ २६ ॥ यस्माच्चंडंचमुंडंचगृ
हीत्वात्वमुपागताः ॥ चामुंडेतिततोलोकेख्या
तादेवीभाविष्यसि ॥ २७ ॥ मार्कंडेयपुराणे
सावर्णिकेमन्वंतरे देवीमाहात्म्येसप्तमः ॥ ७ ॥
उवाच ॥ २ ॥ श्लोकाः ॥ २५ ॥ एवं ॥ २७ ॥
एवमादितः ॥४३९॥ ॥ ऋषिरुवाच ॥ १ ॥ चं
डेचनिहतेदैत्येमुण्डेचविनिपातिते ॥ बहुलेषु

चसैन्येषुक्षयितेष्वसुरेश्वरः ॥ २ ॥ ततःकोप
पराधीनचेताः शुम्भः प्रतापवान् ॥ उद्योगंस
र्वसैन्यानांदैत्यानामादिदेशह ॥ ३ ॥ अद्यसर्व
बलैर्दैत्याःषडशीतिरुदायुधाः ॥ कंबूनांचतुर
शीतिर्निर्यान्तुस्वबलैर्वृताः ॥ ४ ॥ कोटिवीर्या
णिपंचाशदसुराणांकुलानिवै ॥ शतंकुलानि
धौम्राणांनिर्गच्छन्तुममाज्ञया ॥ ५ ॥ कालका
दौर्हृदामौर्वाःकालिकेयास्तथासुराः ॥ युद्धाय

सज्जानिर्यांतु आज्ञया त्वरिता मम ॥ ६ ॥ इ

त्याज्ञाप्यासुरपतिः शुम्भो भैरवशासनः ॥ नि
र्जगाममहासैन्यसहस्त्रैर्बहुभिर्वृतः ॥ ७ ॥ आ
यांतंचण्डिकादृष्ट्वातत्सैन्यमतिभीषणम् ॥ज्या
स्वनैःपूरयामासधरणीगगनांतरम् ॥ ८ ॥ त
तःसिंहोमहानादमतीवकृतवान्नृप ॥ घण्टास्व
नेनतान्नादानंबिकाचोपबृंहयत् ॥ ९ ॥ धनु 
र्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा ॥ नि

नादैर्भीषणैःकालीजिग्येविस्तारितानना।१०।
तंनिनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशम् ॥ देवी
सिंहस्तथाकाली सरोषैःपरिवारिताः ॥ ११ ॥
एतस्मिन्नंतरेभूपविनाशायासुरद्विषाम् ॥ भवा
यामरसिंहानामतिवीर्यबलान्विताः ॥ १२ ॥
ब्रह्मेशगुहविष्णूनांतथैंद्रस्यचशक्तयः ॥ शरी
रेभ्योविनिष्क्रम्यतद्रूपैश्चण्डिकांययुः ॥ १३ ॥
यस्यदेवस्ययद्रूपंयथाभूषणवाहनम् ॥ तद्वदेव

हितच्छक्तिरसुरान्योद्धुमाययौ ॥ १४ ॥ हंसयु
क्तविमानाग्रेसाक्षसूत्रकमण्डलुः ॥ आयाताब्र
ह्मणःशक्तिर्ब्रह्माणीत्यभिधीयते ॥ १५ ॥ माहे
श्वरीवृषारूढात्रिशूलवरधारिणी ॥ महाहिव
लयाप्राप्ताचन्द्ररेखाविभूषणा ॥ १६ ॥ कौमा
रीशक्तिहस्ताच मयूरवरवाहना ॥ योद्धुमभ्या
ययौदैत्यानंबिकागुहरूपिणी ॥ १७ ॥ तथैव
वैष्णवीशक्तिर्गरुडोपरिसंस्थिता ॥ शंखचक्रग

दाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥ १८ ॥ यज्ञवा
राहमतुलंरूपंयाबिभ्रतोहरेः ॥ शक्तिःसाप्यया
ययौतत्रवाराहींबिभ्रतीतनुम् ॥ १९ ॥ नारसिं
हीनृसिंहस्यबिभ्रतीसदृशंवपुः ॥ प्राप्तातत्रसटा
क्षेपाक्षिप्तनक्षत्रसंहतिः ॥ २० ॥ वज्रहस्तातथै
वैन्द्रीगजराजोपरिस्थिता ॥ प्राप्तासहस्रनयनाय
थाशक्रस्तथैवसा ॥ २१ ॥ ततःपरिवृतस्ताभि
रीशानोदेवशक्तिभिः ॥ हन्यतामसुराःशीघ्रंम

 मप्रीत्याहचंडिकाम् ॥२२॥ ततोदेवीशरीरात्तु 
 विनिष्क्रांतातिभीषणा ॥ चंडिकाशक्तिरत्युग्रा
शिवाशतनिनादिनी ॥ २३ ॥ साचाहधूम्रजटि
लमीशानमपराजिता ॥ दूतत्वंगच्छभगवन्पा
र्श्वंशुंभनिशुंभयोः ॥२४॥ ब्रूहिशुंभंनिशुंभंचदा
नवावतिगर्वितौ ॥ येचान्येदानवास्तत्रयुद्धाय
समुपस्थिताः ॥ २५ ॥ त्रैलोक्यमिंद्रोलभतां 
देवाः संतुहविर्भुजः ॥ यूयंप्रयातपातालंयदि

जीवितुमिच्छथ ॥ २६ ॥ बलावलेपादथचेद्ब
वंतोयुद्धकांक्षिणः ॥ तदागच्छततृप्यंतुमच्छि
वाः पिशितेनवः ॥ २७ ॥ यतोनियुक्तोदौत्येन
तयादेव्याशिवःस्वयम् ॥ शिवदूतीतिलोकेस्मिं
स्ततः साख्यातिमागता ॥ २८ ॥ तेपिश्रुत्वाव
चोदेव्याः शर्वाख्यातंमहासुराः ॥ अमर्षापूरि
ताजग्मुर्यत्रकात्यायनीस्थिता ॥ २९ ॥ ततःप्र
थममेवाग्रेशरशक्त्यृष्टिवृष्टिभिः ॥ ववर्षुरुद्धता

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० मर्षास्तांदेवीममरारयः ॥ ३० ॥ साचतान्प्रहि अ.८
१०८ तान्बाणाञ्छूलशक्तिपरश्वधान् ॥ चिच्छेदली
लयाध्मातधनुर्मुक्तैर्महेषुभिः ॥ ३१ ॥ तस्याग्र
तस्तथाकालीशूलपातविदारितान् ॥ खट्वां
गपोथितांश्चारीन्कुर्वतीव्यचरत्तदा ॥ ३२ ॥
कमंडलुजलाक्षेपहतवीर्यान्हतौजसः ॥ ब्रह्मा
णीचाऽकरोच्छत्रून्येनयेनस्मधावति ॥ ३३ ॥ १०८
माहेश्वरीत्रिशूलेनतथाचक्रेणवैष्णवी ॥ दैत्या

ञ्जघानकौमारीतथाशक्त्यातिकोपना ॥ ३४ ॥
ऐंद्रीकुलिशपातेनशतशोदैत्यदानवाः ॥ पेतु
र्विदारिताः पृथ्व्यांरुधिरौघप्रवर्षिणः ॥ ३५ ॥
तुंडप्रहारविध्वस्तादंष्ट्राग्रक्षतवक्षसः ॥ वाराहमू
र्त्यान्यपतंश्चक्रेणचविदारिताः ॥ ३६ ॥ नखै
र्विदारितांश्चान्यान्भक्षयंतीमहासुरान् ॥ नार
सिंहीचचाराजौ नादापूर्णदिगंबरा ॥ ३७ ॥
स.१० चंडाट्टहासैरसुराः शिवदूत्यभिदूषिताः ॥ पेतुः

पृथिव्यांपतितांस्तांश्चखादाथसातदा ॥ ३८ ॥
१०९ इतिमातृगणंक्रुद्धंमर्दयंतंमहासुरान् ॥ दृष्ट्वा
भ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ॥ ३९ ॥ प
लायनपरान्दृष्ट्वादैत्यान्मातृगणार्दितान् ॥ यो
द्धुमभ्याययौक्रुद्धोरक्तबीजोमहासुरः ॥ ४० ॥
रक्तबिंदुर्यदाभूमौपतत्यस्यशरीरतः ॥ समुत्प
ततिमेदिन्यांतत्प्रमाणोमहासुरः ॥ ४१ ॥ युयु १०९
धेसगदापाणिरिंद्रशक्त्यामहासुरः ॥ ततश्चैंद्री

स्ववज्रेणरक्तबीजमताडयत् ॥४२॥ कुलिशेना
हतस्याशुबहुसुस्रावशोणितम् ॥ समुत्तस्थुस्त
तोयोधास्तद्रूपास्तत्पराक्रमाः ॥ ४३ ॥ यावंतः
पतितास्तस्यशरीराद्रक्तबिंदवः ॥ तावंतः पुरु
षाजातास्तद्वीर्यबलविक्रमाः ॥ ४४ ॥ तेचापि
युयुधुस्तत्रपुरुषारक्तसंभवाः ॥ समंमातृभिर
त्युग्रशस्त्रपातातिभीषणम् ॥ ४५ ॥ पुनश्चवज्र
पातेनक्षतमस्यशिरोयदा ॥ ववाहरक्तंपुरुषास्त

तोजाताःसहस्रशः ॥ ४६ ॥ वैष्णवीसमरेचैनं
चक्रेणाभिजघानह ॥ गदयाताडयामासऐंद्री
तमसुरेश्वरम् ॥४७॥ वैष्णवीचक्रभिन्नस्यरुधि
रस्रावसंभवैः ॥ सहस्रशोजगद्व्याप्तंतत्प्रमाणैर्म
हासुरैः ॥ ४८ ॥ शक्त्याजघानकौमारीवाराही
चतथासिना ॥ माहेश्वरीत्रिशूलेनरक्तबीजंम
हासुरम् ॥ ४९ ॥ सचापिगदयादैत्यः सर्वाएवा
हनत्पृथक् ॥ मातृः कोपसमाविष्टोरक्तबीजोम

हासुरः ॥ ५० ॥ तस्याहतस्यबहुधाशक्तिशूला
दिभिर्भुवि ॥ पपातयोवैरक्तौघस्तेनासञ्छत
शोऽसुराः ॥ ५१ ॥ तैश्चासुरासृक्संभूतैरसुरैःस
कलंजगत् ॥ व्याप्तमासीत्ततोदेवाभयमाज
ग्मुरुत्तमम् ॥ ५२ ॥ तान्विषण्णान्सुरान्दृष्ट्वा
चंडिकाप्राहसत्वरम् ॥ उवाचकालींचामुंडेवि
स्तीर्णंवदनंकुरु ॥ ५३ ॥ मच्छस्त्रपातसंभूतान्
रक्तबिंदून्महासुरान् ॥ रक्तबिंदोःप्रतीच्छत्वंव

क्रेणानेनवेगिना ॥ ५४ ॥ भक्षयंतीचररणेत
दुत्पन्नान्महासुरान् ॥ एवमेषक्षयंदैत्यःक्षीण
रक्तोगमिष्यति ॥ ५५ ॥ भक्ष्यमाणास्त्वया
चोग्रानचोत्पत्स्यंतिचापरे ॥ इत्युक्त्वातांततो
देवीशूलेनाभिजघानतम् ॥५६॥ मुखेनकाली
जगृहेरक्तबीजस्यशोणितं ॥ ५७ ॥ ततोसावा
जघानाथगदयातत्रचंडिकाम् ॥ नचास्यावेद
नांचक्रेगदापातोल्पिकामपि ॥ ५८ ॥ तस्याह

तस्यदेहात्तुबहुसुस्रावशोणितम् ॥ यतस्ततस्त
द्वक्त्रेणचामुंडासंप्रतीच्छति ॥ ५९ ॥ मुखेसमु
द्गतायेस्यारक्तपातान्महासुराः ॥ तांश्चखादाथ
चामुंडापपौतस्यचशोणितम् ॥ ६० ॥ देवीशू
लेनवज्रेणबाणैरसिभिर्ऋष्टिभिः ॥ जघानरक्त
बीजंतंचामुंडापीतशोणितम् ॥ ६१ ॥ सपपा
तमहीपृष्ठेशस्त्रसंघसमाहतः ॥ नीरक्तश्चमहीपा
लरक्तबीजोमहासुरः ॥ ६२ ॥ ततस्तेहर्षमतुल

मवापुस्त्रिदशानृप ॥ तेषांमातृगणोजातोनन
र्तासृङ्मदोद्धतः ॥ ६३ ॥ मार्कण्डेयपुराणेसाव
र्णिकेमन्वंतरेदेवीमाहात्म्येअष्टमः ॥ ८॥ उवा
च ॥ १ ॥ अर्धं ॥ १ ॥ श्लोकाः ॥६१॥ एवं ॥६३॥
एवमादितः ॥ ५०२ ॥ ॥ राजोवाच ॥ १ ॥
विचित्रमिदमाख्यातंभगवन्भवतामम ॥ दे
व्याश्चरितमाहात्म्यंरक्तबीजवधाश्रितम् ॥२॥
भूयश्चेच्छाम्यहंश्रोतुंरक्तबीजेनिपातिते ॥ च

कारशुंभोयत्कर्मनिशुंभश्चातिकोपनः ॥ ३ ॥
ऋषिरुवाच ॥ ४ ॥ चकारकोपमतुलंरक्तबीजे
निपातिते ॥ शुंभासुरोनिशुंभश्चहतेष्वन्येषुचा
हवे ॥ ५ ॥ हन्यमानंमहासैन्यंविलोक्यामर्ष
मुद्वहन् ॥ अभ्यधावन्निशुंभोथमुख्ययासुरसेन
या ॥ ६ ॥ तस्याग्रतस्तथापृष्ठेपार्श्वयोश्चमहासु
राः॥संदष्टौष्ठपुटाःक्रुद्धाहंतुंदेवीमुपाययुः॥७॥
आजगाममहावीर्यःशुंभोपिस्वबलैर्वृतः ॥ निहं

तुंचंडिकांकोपात्कृत्वायुद्धंतुमातृभिः ॥ ८ ॥
ततोयुद्धमतीवासीद्देव्याः शुंभनिशुंभयोः ॥
शरवर्षमतीवोग्रंमेघयोरिववर्षतोः ॥९॥ चिच्छे
दाऽस्तान्छरांस्ताभ्यांचंडिकास्वशरोत्करैः ॥
ताडयामासचांगेषु शस्त्रौघैरसुरेश्वरौ ॥ १० ॥
निशुंभोनिशितंखड्गंचर्मचादायसुप्रभम् ॥ अ
ताडयन्मूर्ध्निसिंहंदेव्यावाहनमुत्तमम् ॥ ११ ॥
ताडितेवाहनेदेवीक्षुरप्रेणासिमुत्तमम् ॥निशुंभ

स्याशुचिच्छेदचर्मचाप्यष्टचंद्रकम् ॥ १२ ॥ छि
न्नेचर्मणिखड्गे चशक्तिंचिक्षेपसोऽसुरः ॥ ताम
प्यस्याद्द्विधाचक्रेचक्रेणाभिमुखागताम् ॥ १३ ॥
कोपाध्मातोनिशुंभोथशूलंजग्राहदानवः ॥ आ
यांतंमुष्टिपातेनदेवीतच्चाप्यचूर्णयत् ॥ १४ ॥
आविध्याथगदांसोपिचिक्षेपचंडिकांप्रति ॥ सा
पिदेव्यास्त्रिशूलेनभिन्नाभस्मत्वमागता ॥ १५ ॥
ततःपरशुहस्तंतमायांतंदैत्यपुंगवम् ॥ आहत्य

 देवीबाणौघैरपातयतभूतले ॥ १६ ॥ तस्मि 
 न्निपतितेभूमौनिशुंभेभीमविक्रमे ॥ भ्रातर्यती
वसंक्रुद्धःप्रययौहंतुमंबिकाम् ॥ १७ ॥ सरथ
स्थस्तथात्युच्चैर्गृहीतपरमायुधैः ॥ भुजैरष्टाभि
रतुलैर्व्याप्याशेषंबभौनभः ॥ १८ ॥ तमायां
तंसमालोक्य देवीशंखमवादयत् ॥ ज्याश
ब्दंचापिधनुषश्चकारातीवदुस्सहम् ॥ १९ ॥ पू 
रयामासककुभोनिजघंटास्वनेनच ॥ समस्तदै

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

त्यसैन्यानांतेजोवधविधायिना ॥ २० ॥ ततः
सिंहोमहानादैस्त्याजितेभमहामदैः ॥ पूरया
मासगगनंगांतथैवदिशोदश ॥ २१ ॥ ततः
कालीसमुत्पत्यगगनंक्ष्मामताडयत् ॥ कराभ्यां
तन्निनादेनप्राक्स्वनास्तेतिरोहिताः ॥ २२ ॥
अट्टाट्टहासमशिवंशिवदूतीचकारह ॥ तैःशब्दै
रसुरास्त्रेसुःशुंभःकोपंपरंययौ ॥ २३ ॥ दुरात्मं
स्तिष्ठतिष्ठेतिव्याजहारांबिकायदा ॥ तदाजये

स० त्याभिहितंदेवैराकाशसंस्थितैः ॥ २४ ॥ शुंभे अ ९
११५ नागत्ययाशक्तिर्मुक्ताज्वालातिभीषणा ॥ आ
यांतीवह्निकूटाभासानिरस्तामहोल्कया ॥२५॥
सिंहनादेनशुंभस्यव्याप्तंलोकत्रयान्तरम् ॥ नि
र्घातनिःस्वनोघोरोजितवानवनीपते ॥ २६ ॥
शुंभमुक्ताञ्छरान्देवीशुंभस्तत्प्रहिताञ्छरान् ॥
चिच्छेदस्वशरैरुग्रैः शतशोथसहस्रशः ॥२७॥ ११५
ततःसाचण्डिकाक्रुद्धाशूलेनाभिजघानतम् ॥

सतदाभिहतोभूमौमूर्च्छितोनिपपातह ॥ २८ ॥
ततोनिशुंभःसंप्राप्यचेतनामात्तकार्मुकः ॥ आ
जघानशरैर्देवींकालींकेसरिणंतथा ॥ २९ ॥ पुन
श्चकृत्वाबाहूनामयुतंदनुजेश्वरः ॥ चक्रायुधेन
दितिजश्छादयामासचंडिकाम् ॥ ३० ॥ ततोभग
वतीक्रुद्धादुर्गादुर्गार्तिनाशिनी ॥ चिच्छेददेवी
चक्राणिस्वशरैःसायकांश्चतान् ॥ ३१ ॥ ततोनिशुं
भोवेगेनगदामादायचंडिकाम् ॥ अभ्यधावतवै

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हंतुंदैत्यसैन्यसमावृतः ॥ ३२ ॥ तस्यापततएवा
 शुगदांचिच्छेदचंडिका ॥ खड्गेनशितधारेणस
चशूलंसमाददे ॥ ३३ ॥ शूलहस्तंसमायांतंनिशुं
भममरार्दनम् ॥ हृदिविव्याधशूलेनवेगाविद्धे
नचंडिका ॥३४॥ भिन्नस्यतस्यशूलेनहृदयान्निः
सृतोपरः ॥ महाबलोमहावीर्यस्तिष्ठेतिपुरुषोव
दन् ॥ ३५ ॥ तस्यनिष्क्रामतोदेवीप्रहस्यस्वनव 
त्ततः ॥ शिरश्चिच्छेदखड्गेनततोसावपतद्भुवि

॥ ३६ ॥ ततःसिंहश्चखादोग्रदंष्ट्राक्षुण्णाशिरो
धरान् ॥ असुरांस्तांस्तथाकालीशिवदूतीतथा
परान् ॥ ३७ ॥ कौमारीशक्तिनिर्भिन्नाःकेचिन्ने
शुर्महासुराः ॥ ब्रह्माणीमंत्रपूतेनतोयेनान्येनि
राकृताः ॥ ३८ ॥ माहेश्वरीत्रिशूलेनभिन्नाःपेतु
स्तथापरे ॥ वाराहीतुंडघातेनकेचिच्चूर्णीकृता
भुवि ॥ ३९ ॥ खंडंखंडंचचक्रेणवैष्णव्यादान
वाःकृताः ॥ वज्रेणचैंद्रीहस्ताग्रविमुक्तेनतथा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 परे ॥ ४० ॥ केचिद्विनेशुरसुराःकेचिन्नष्टामहा 
हवात् ॥ भक्षिताश्चापरेकालीशिवदूतीमृगा
धिपैः ॥ ४१ ॥ मार्कण्डेयपुराणेसावर्णिके मन्वं
तरेदेवीमाहात्म्येनवमः ॥ ९ ॥ उवाच ॥ २ ॥
श्लोकाः॥३९॥एवं॥४१॥एवमादितः॥५४३॥
ऋषिरुवाच ॥ १ ॥ निशुंभंनिहतंदृष्ट्वाभ्रातरंप्रा
णसंमितम् ॥ हन्यमानंबलंचैवशुंभःक्रुद्धोऽब्र 
वीद्वचः ॥ २ ॥ बलावलेपदुष्टेत्वंमादुर्गेगर्वमा

वह ॥ अन्यासांबलमाश्रित्य युध्यसेचातिमा
निनी ॥ ३ ॥ देव्युवाच ॥ ४ ॥ एकैवाहंज
गत्यत्रद्वितीयाकाममापरा ॥ पश्यैतादुष्टमय्ये
वविशंत्योमद्विभूतयः ॥ ५ ॥ ततःसमस्तास्ता
देव्योब्रह्माणीप्रमुखालयम् ॥ तस्यादेव्यास्तनौ
जग्मुरेकैवासीत्तदांबिका ॥ ६ ॥ देव्युवाच
॥ ७ ॥ अहंविभूत्याबहुभिरिहरूपैर्यदास्थिता ॥
तत्संहृतंमयैकैवतिष्ठाम्याजौस्थिरोभव ॥ ८ ॥

ऋषिरुवाच ॥ ९ ॥ ततःप्रववृतेयुद्धंदेव्याःशुं
भस्यचोभयोः ॥ पश्यतांसर्वदेवानामसुराणां
चदारुणम् ॥ १० ॥ शरवर्षैःशितैःशस्त्रैस्तथाचा
स्त्रैःसुदारुणैः ॥ तयोर्युद्धमभूद्भूयःसर्वलोकभ
यंकरम् ॥ ११ ॥ दिव्यान्यस्त्राणिशतशोमुमु
चेयान्यथांबिका ॥ बभंजतानिदैत्येंद्रस्तत्प्रती
घातकर्तृभिः ॥ १२ ॥ मुक्तानितेनचास्त्राणि
दिव्यानिपरमेश्वरी ॥ बभंजलीलयैवोग्रहुंका

११८

रोच्चारणादिभिः ॥ १३ ॥ ततःशरशतैर्देवीमा
च्छादयतसोसुरः ॥ सापितत्कुपितादेवीधनु
श्चिच्छेदचेषुभिः ॥ १४ ॥ छिन्नेधनुषिदैत्येंद्र
स्तथाशक्तिमथाददे ॥ चिच्छेददेवीचक्रेणता
मप्यस्यकरेस्थिताम् ॥ १५ ॥ ततःखड्गमुपादा
यशतचंद्रंचभानुमत् ॥ अभ्यधावततांदेवींदै
त्यानामधिपेश्वरः ॥ १६ ॥ तस्यापततएवाशु
खड्गंचिच्छेदचंडिका ॥ धनुर्मुक्तैःशितैर्बाणैश्च

मंचार्ककरामलम् ॥ १७ ॥ अश्वांश्चपातयामा
सरथंसारथिनासह ॥ हताश्वःसतदादैत्यश्छिन्न
धन्वाविसारथिः ॥ १८ ॥ जग्राहमुद्गरंघोरमं
बिकानिधनोद्यतः ॥ चिच्छेदापततस्तस्यमुद्गरं
निशितैःशरैः ॥ १९ ॥ तथापिसोभ्यधावत्तांमु
ष्टिमुद्यम्यवेगवान् ॥ समुष्टिंपातयामासहृदये
दैत्यपुंगवः ॥ २० ॥ देव्यास्तंचापिसादेवीतले ११९
नोरस्यताडयत् ॥ तलप्रहाराभिहतोनिपपात

महीतले ॥ २१ ॥ सदैत्यराजःसहसापुनरेवत
थोत्थितः॥उत्पत्यचप्रगृह्योच्चैर्देवींगगनमास्थि
तः ॥ २२ ॥ तत्रापिसानिराधारायुयुधेतेनचं
डिका ॥ २३ ॥ नियुद्धंखेतदादैत्यश्चंडिकाचप
रस्परम् ॥ चक्रतुःप्रथमंसिद्धमुनिविस्मयकार
कम् ॥ २४ ॥ ततोनियुद्धंसुचिरंकृत्वातेनांबि
कासह ॥ उत्पाट्यभ्रामयामासचिक्षेपधरणी
तले॥ २५ ॥ सक्षिप्तोधरणींप्राप्य मुष्टिमुद्यम्य

वेगवान् ॥ अभ्यधावतदुष्टात्माचंडिकानिधने
च्छया ॥ २६ ॥ तमायांतंततोदेवी सर्वदैत्यज
नेश्वरम् ॥ जगत्यांपातयामासभित्त्वाशूलेनव
क्षसि ॥ २७ ॥ सगतासुःपपातोर्व्यां देवीशूला
ग्रविक्षतः ॥ चालयन्सकलांपृथ्वींसाब्धिद्वीपां
सपर्वताम् ॥ २८ ॥ ततःप्रसन्नमखिलं हतेत
स्मिन्दुरात्मनि ॥ जगत्स्वास्थ्यमतीवापनिर्मलं 
चाभवन्नभः ॥ २९ ॥ उत्पातमेघाःसोल्काये

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

प्रागासंस्तेशमंययुः ॥ सरितोमार्गवाहिन्यस्त
थासंस्तत्रपातिते ॥ ३० ॥ ततोदेवगणाःसर्वेह
र्षनिर्भरमानसाः ॥ बभूवुर्निहतेतस्मिन्गंधर्वा
ललितंजगुः ॥ ३१ ॥ अवादयंस्तथैवान्येननृ
तुश्चाप्सरोगणाः ॥ ववुःपुण्यास्तथावाताःसुप्र
भोभूद्दिवाकरः ॥ ३२ ॥ मार्कण्डेयपुराणेसाव
र्णिकेमन्वंतरेदेवीमाहात्म्येदशमः ॥ १० ॥ ॥
स.११ उवाच ॥४॥ अर्धं ॥ १ ॥ श्लोकमंत्राः ॥ २७ ॥

स० एवं ॥ ३२ ॥ एवमादितः ॥ ५७५ ॥ ॥ अ० ११
१२१ ऋषिरुवाच ॥१॥ देव्याहतेतत्रमहासुरेंद्रेसेंद्राः
सुरावह्निपुरोगमास्ताम् ॥ कात्यायनींतुष्टुवुरिष्ट
लाभाद्विकाशिवक्त्राब्जविकासिताशाः ॥ २ ॥
देविप्रपन्नार्तिहरेप्रसीद प्रसीदमातर्जगतोखि
लस्य ॥ प्रसीदविश्वेश्वरिपाहिविश्वंत्वमीश्वरीदे
विचराचरस्य ॥ ३ ॥ आधारभूताजगतस्त्वमे १२१
कामहीस्वरूपेणयतःस्थितासि ॥ अपांस्वरूप

स्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्यवीर्ये
॥ ४ ॥ त्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्यबीजं
परमासिमाया ॥ संमोहितंदेविसमस्तमेतत्त्वं
वैप्रसन्नाभुविमुक्तिहेतुः ॥ ५ ॥ विद्याःसमस्ता
स्तवदेविभेदाःस्त्रियःसमस्ताःसकलाजगत्सु ॥
त्वयैकयापूरितमंबयैतत्कातेस्तुतिः स्तव्यपरा
परोक्तिः ॥ ६ ॥ सर्वभूतायदादेविभुक्तिमुक्तिप्र
दायिनी ॥ त्वंस्तुतास्तुतयेकावाभवंतुपरमोक्त

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० य: ॥ ७ ॥ सर्वस्यबुद्धिरूपेणजनस्यहृदिसंस्थिते ॥ अ० ११
१२२ स्वर्गापवर्गदेदेविनारायणिनमोस्तुते ॥ ८ ॥
कलाकाष्ठादिरूपेणपरिणामप्रदायिनि ॥ विश्व
स्योपरतौशक्तेनारायणिनमोस्तुते ॥ ९ ॥ सर्वमं
गलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंब
केगौरिनारायणिनमोस्तुते ॥ १० ॥ सृष्टिस्थिति
विनाशानांशक्तिभूतेसनातनि ॥ गुणाश्रयेगुण १२२
मयेनारायणिनमोस्तुते ॥ ११ ॥ शरणागतदीना

र्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनाराय
णिनमोस्तुते॥१२॥हंसयुक्तविमानस्थेब्रह्माणी
रूपधारिणि ॥ कौशांभःक्षरिकेदेविनारायणि
नमोस्तुते॥१३॥त्रिशूलचंद्राहिधरेमहावृषभ
वाहिनि ॥ माहेश्वरीस्वरूपेणनारायणिनमो
स्तुते ॥ १४ ॥ मयूरकुक्कुटवृतेमहाशक्तिध
रेनघे ॥ कौमारीरूपसंस्थानेनारायणिनमोस्तु
ते ॥ १५ ॥ शंखचक्रगदाशार्ङ्गगृहीतपरमा

युधे ॥ प्रसीदवैष्णवीरूपेनारायणिनमोस्तुते
॥ १६ ॥ गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृतवसुंधरे ॥
वराहरूपिणिशिवेनारायणिनमोस्तुते ॥१७॥
नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतोद्यमे ॥ त्रैलो
क्यत्राणसहितेनारायणिनमोस्तुते ॥१८॥ कि
रीटिनिमहावज्रेसहस्रनयनोज्ज्वले ॥ वृत्रप्राण
हरेचैंद्रि नारायणिनमोस्तुते ॥१९॥ शिवदूती
स्वरूपेणहतदैत्यमहाबले ॥ घोररूपेमहारावे

नारायणिनमोस्तुते ॥ २० ॥ दंष्ट्राकरालवदने
शिरोमालाविभूषणे ॥ चामुंडेमुंडमथनेनारा
यणिनमोस्तुते ॥ २१ ॥ लक्ष्मिलज्जेमहाविद्ये
श्रद्धेपुष्टिस्वधेध्रुवे ॥ महारात्रिमहामायेनाराय
णिनमोस्तुते ॥ २२ ॥ मेधेसरस्वतिवरेभूतिबा
भ्रवितामासि ॥ नियतेत्वंप्रसीदेशेनारायणिन
मोस्तुते ॥ २३ ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिस
मन्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तु

 ते ॥ २४ ॥ एतत्तेवदनंसौम्यंलोचनत्रयभूषि 
 तम् ॥ पातुनःसर्वभूतेभ्यःकात्यायनिनमोस्तुते 
॥ २५ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूद
नम् ॥ त्रिशूलंपातुनोभीतेर्भद्रकालिनमोस्तुते
॥ २६ ॥ हिनस्तिदैत्यतेजांसिस्वनेनापूर्ययाज
गत् ॥ साघंटापातुनोदेविपापेभ्योनःसुतानिव
॥ २७ ॥ असुरासृग्वसापंकचर्चितस्तेकरोज्ज्व 
लः ॥ शुभायखड्गोभवतुचंडिकेत्वांनतावयम्

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ २८ ॥ रोगानशेषानपहंसितुष्टारुष्टातुकामा
न्सकलानभीष्टान् ॥ त्वामाश्रितानांनविपन्नरा
णांत्वामाश्रिताह्याश्रयतांप्रयांति ॥ २९ ॥ एत
त्कृतंयत्कदनंत्वयाद्यधर्मद्विषांदेविमहासुराणा
म् ॥ रूपैरनेकैर्बहुधात्ममूर्तिंकृत्वाऽम्बिकेतत्
प्रकरोतिकान्या ॥ ३० ॥ विद्यासुशास्त्रेषुविवेक
दीपेष्वाद्येषुवाक्येषुचकात्वदन्या ॥ ममत्वग
र्तेतिमहांधकारे विभ्रामयत्येतदतीवविश्वम्

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ ३१ ॥ रक्षांसियत्रोग्रविषाश्चनागायत्रारयोद
 स्युबलानियत्र ॥ दावानलोयत्रतथाब्धिमध्येत
त्रस्थितात्वंपरिपासिविश्वम् ॥ ३२ ॥ विश्वेश्व
रि त्वं परिपासि विश्वं विश्वात्मिकाधारयसीह
विश्वम् ॥ विश्वेशवंद्याभवतीभवंतिविश्वाश्र
यायेत्वयिभक्तिनम्राः ॥ ३३ ॥ देविप्रसीदपरि
पालयनोऽरिभीतेर्नित्यं यथासुरवधादधुनैवस 
द्यः ॥ पापानिसर्वजगतांप्रशमंनयाशु उत्पात

पाकजनितांश्चमहोपसर्गान् ॥ ३४ ॥ प्रणतानां
प्रसीदत्वंदेविविश्वार्तिहारिणि ॥ त्रैलोक्यवा
सिनामीड्येलोकानांवरदाभव ॥ ३५ ॥ देव्यु
वाच ॥ ३६ ॥ वरदाहंसुरगणावरंयंमनसेच्छ
थ ॥ तंवृणुध्वंप्रयच्छामिजगतामुपकारकम्
॥ ३७ ॥ देवाऊचुः ॥ ३८ ॥ सर्वबाधाप्रशम
नंत्रैलोक्यस्याखिलेश्वरि ॥ एवमेवत्वयाकार्य
मस्मद्वैरिविनाशनम् ॥ ३९ ॥ देव्युवाच ॥४०॥

वैवस्वतेंतरेप्राप्तेअष्टाविंशतिमेयुगे ॥ शुंभोनि
 शुंभश्चैवान्यावुत्पत्स्येतेमहासुरौ ॥ ४१ ॥ नं
दगोपगृहेजातायशोदागर्भसंभवा ॥ ततस्तौ
नाशयिष्यामिविंध्याचलनिवासिनी ॥ ४२ ॥
पुनरप्यतिरौद्रेणरूपेणपृथिवीतले ॥ अवतीर्य
हनिष्यामिवैप्रचित्तांश्चदानवान् ॥ ४३ ॥ भक्ष
यंत्याश्चतानुग्रान्वैप्रचित्तान्महासुरान् ॥ रक्ता 
दंताभविष्यंतिदाडिमीकुसुमोपमाः ॥ ४४ ॥

ततोमांदेवताःस्वर्गेमर्त्यलोकेचमानवाः ॥ स्तु
वंतोव्याहरिष्यंतिसततंरक्तदंतिकाम् ॥ ४५ ॥
भूयश्चशतवार्षिक्यामनावृष्ट्यामनंभसि ॥ मु
निभिःसंस्मृता भूमौ संभविष्याम्ययोनिजा
॥ ४६ ॥ ततःशतेननेत्राणांनिरीक्षिष्याम्यहंमु
नीन् ॥ कीर्तयिष्यंतिमनुजाःशताक्षीमितिमां
ततः ॥ ४७ ॥ ततोहमखिलंलोकमात्मदेहस
मुद्भवैः ॥ भरिष्यामिसुराःशाकैरावृष्टेःप्राणधा

रकैः ॥ ४८ ॥ शाकंभरीतिविख्यातिंतदाया
 स्याम्यहंभुवि ॥ ४९ ॥ तत्रैवचवधिष्यामिदुर्ग
माख्यंमहासुरम् ॥ दुर्गादेवीतिविख्यातंतन्मे
नामभविष्यति ॥ ५० ॥ पुनश्चाहंयदाभीमंरू
पंकृत्वाहिमाचले ॥ रक्षांसिभक्षयिष्यामिमुनी
नांत्राणकारणात् ॥ ५१ ॥ तदामांमुनयःसर्वे
स्तोष्यंत्यानम्रमूर्तयः ॥ भीमादेवीतिविख्यातं 
तन्मेनामभविष्यति ॥ ५२ ॥ यदारुणाख्यस्त्रै

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

लोकयेमहाबाधांकरिष्यति ॥ तदाहंभ्रामरंरूपं
कृत्वासंख्येयषट्पदम् ॥ ५३ ॥ त्रैलोक्यस्यहि
तार्थायवधिष्यामिमहासुरम् ॥ भ्रामरीतिच
मांलोकास्तदास्तोष्यंतिसर्वतः ॥ ५४ ॥ इत्थंय
दायदाबाधादानवोत्थाभविष्यति ॥ तदातदा
वतीर्याहंकरिष्याम्यरिसंक्षयम् ॥ ५५ ॥ श्री
मार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहा
त्म्येनारायणीस्तुतिरेकादशः ॥ ११ ॥ उवाच

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





॥ ४ ॥ अर्धमंत्राः ॥ १ ॥ श्लोकमंत्राः ॥ ५० ॥
एवं ॥ ५५ ॥ एवमादितः ॥ ६३० ॥
देव्युवाच ॥ १ ॥ एभिःस्तवैश्चमांनित्यंस्तोष्य
तेयःसमाहितः ॥ तस्याहंसकलांबाधांशमयि
ष्याम्यसंशयम् ॥ २ ॥ मधुकैटभनाशंचम
हिषासुरघातनम् ॥ कीर्तयिष्यंतियेतद्वद्वधंशुं
भनिशुंभयोः ॥ ३ ॥ अष्टम्यांचचतुर्दश्यांनव
म्यांचैकचेतसः ॥ श्रोष्यंतिचैवयेभक्त्यामम

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

माहात्म्यमुत्तमम् ॥ ४ ॥ नतेषांदुष्कृतंकिंचिद्दु
ष्कृतोत्थानचापदः ॥ भविष्यतिनदारिद्र्यंन
चैवेष्टवियोजनम् ॥ ५ ॥ शत्रुभ्योनभयंतस्यद
स्युतोवानराजतः ॥ नशस्त्रानलतोयौघात्कदा
चित्संभविष्यति ॥ ६ ॥ तस्मान्ममैतन्माहा
त्म्यंपठितव्यंसमाहितैः ॥ श्रोतव्यंचसदाभ
क्त्यापरंस्वस्त्ययनंमहत् ॥ ७ ॥ उपसर्गानशे
षांस्तुमहामारीसमुद्भवान् ॥ तथात्रिविधमु

त्पातंमाहात्म्यंशमयेन्मम ॥ ८ ॥ यत्रैतत्पठ्य
 तेसम्यङ्नित्यमायतनेमम ॥ सदानतद्विमो
क्ष्यामिसांनिध्यंतत्रमेस्थितम् ॥ ९ ॥ बलिप्रदा
नेपूजायामग्निकार्येमहोत्सवे ॥ सर्वंममैतन्मा
हात्म्यमुच्चार्यंश्राव्यमेवच ॥ १० ॥ जानताजा
नतावापिबलिपूजांयथाकृताम् ॥ प्रतीक्षिष्या
म्यहंप्रीत्यावह्निहोमंतथाकृतम् ॥ ११ ॥ शर 
त्कालेमहापूजाक्रियतेयाचवार्षिकी ॥ तस्यांम

मैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वितः ॥ १२ ॥
सर्वबाधाविनिर्मुक्तोधनधान्यसमन्वितः ॥ म
नुष्योमत्प्रसादेनभविष्यतिनसंशयः ॥ १३ ॥
श्रुत्वाममैतन्माहात्म्यंतथाचोत्पत्तयःशुभाः ॥
पराक्रमंचयुद्धेषुजायतेनिर्भयः पुमान् ॥ १४ ॥
रिपवःसंक्षयंयांतिकल्याणंचोपपद्यते ॥ नंदते
चकुलंपुंसांमाहात्म्यंममशृण्वताम् ॥ १५ ॥
शांतिकर्मणिसर्वत्रतथादुःस्वप्नदर्शने ॥ ग्रहपी

स० डासुचोग्रासुमाहात्म्यंशृणुयान्मम ॥ १६ ॥ उ अ० १२
१३० पसर्गाःशमंयांतिग्रहपीडाश्चदारुणाः ॥ दुःस्व
प्नंचनृभिर्दृष्टंसुस्वप्नमुपजायते ॥ १७ ॥ बाल
ग्रहाभिभूतानांबालानांशांतिकारकम् ॥ संघा
तभेदेचनृणांमैत्रीकरणमुत्तमम् ॥ १८ ॥ दुर्वृ
त्तानामशेषाणांबलहानिकरंपरम् ॥ रक्षोभूत
पिशाचानांपठनादेवनाशनम् ॥ १९ ॥ सर्वं म १३०
मैतन्माहात्म्यंममसान्निधिकारकम् ॥ २० ॥

पशुपुष्पार्घधूपैश्चगंधदीपैस्तथोत्तमैः ॥ विप्रा
णांभोजनैर्होमैःप्रोक्षणीयैरहर्निशम् ॥ २१ ॥
अन्यैश्चविविधैर्भोगैःप्रदानैर्वत्सरेणया ॥ प्रीति
र्मेंक्रियतेसास्मिन्सकृदुच्चारितेश्रुते ॥ २२ ॥
श्रुतंहरतिपापानितथारोग्यंप्रयच्छति ॥ रक्षां
करोतिभूतेभ्योजन्मनांकीर्तनंमम ॥ २३ ॥
युद्धेषुचरितंयन्मेदुष्टदैत्यनिबर्हणम् ॥ तस्मि
ञ्छुतेवैरिकृतंभयंपुंसांनजायते ॥ २४ ॥ यु

 

ष्माभिःस्तुतयोयाश्च याश्चब्रह्मर्षिभिःकृताः ॥
१३१ ब्रह्मणाचकृतास्तास्तु प्रयच्छंतुशुभांमतिम्
॥ २५ ॥ अरण्येप्रांतरेवापिदावाग्निपरिवारि
तः ॥ दस्युभिर्वावृतःशून्येगृहीतोवापिशत्रुभिः
॥ २६ ॥ सिंहव्याघ्रानुयातोवावनेवावनहस्ति
भिः ॥ राज्ञाक्रुद्धेनचाज्ञप्तोवध्योबंधगतोपिवा
॥ २७ ॥ आघूर्णितोवावातेनस्थितःपोतेमहार्ण १३१
वे ॥ पतत्सुचापिशस्त्रेषुसंग्रामेभृशदारुणे। २८।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

सर्वबाधासुघोरासुवेदनाभ्यर्दितोपिवा ॥ स्म
रन्ममैतच्चरितंनरोमुच्येतसंकटात् ॥ २९ ॥
ममप्रभावात्सिंहाद्यादस्यवोवैरिणस्तथा ॥ दू
रादेवपलायंतेस्मरतश्चरितंमम ॥ ३० ॥ ऋ
षिरुवाच ॥ ३१ ॥ इत्युक्त्वासाभगवतीचंडि
काचंडविक्रमा ॥ पश्यतांसर्वदेवानांतत्रैवांतर
धीयत ॥३२॥ तेपिदेवानिरातंकाःस्वाधिकारा
न्यथापुरा ॥ यज्ञभागभुजःसर्वेचक्रुर्विनिहतार

य: ॥ ३३ ॥ दैत्याश्चदेव्यानिहतेशुंभेदेवरिपौयु
 धि ॥ जगद्विध्वंसकेतस्मिन्महोग्रेतुलविक्रमे
॥३४॥ निशुंभेचमहावीर्येंशेषा:पातालमाययु:
॥ ३५ ॥ एवंभगवतीदेवी सानित्यापिपुन:
पुन: ॥ संभूयकुरुतेभूपजगत:परिपालनम्
॥ ३६ ॥ तयैतन्मोह्यतेविश्वंसैवविश्वंप्रसूयते ॥
सायाचिताचविज्ञानंतुष्टाऋद्धिंप्रयच्छति।३७। 
व्याप्तंतयैतत्सकलंब्रह्मांडंमनुजेश्वर ॥ महादे

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

व्यामहाकालीमहामारीस्वरूपया ॥ ३८ ॥ सै
वकालेमहामारी सैवसृष्टिर्भवत्यजा ॥ स्थितिं
करोतिभूतानां सैवकालेसनातनी ॥ ३९ ॥ भ
वकालेनृणांसैवलक्ष्मीर्वृद्धिप्रदागृहे ॥ सैवाभा
वेतथालक्ष्मीर्विनाशायोपजायते ॥ ४० ॥ स्तु
तासंपूजितापुष्पैर्गंधधूपादिभिस्तथा ॥ ददाति
वित्तंपुत्रांश्चमतिंधर्मेतथाशुभाम् ॥ ४१ ॥ मार्कं
स.१२ डेयपुराणे सावर्णिकेमन्वंतरेदेव्याश्चरितमाहा

स्येभगवतीवाक्यंद्वादश: ॥१२॥ उवाच ॥२॥
 अर्धं॥२॥ श्लोका:॥३७॥ एवं ॥४१॥ एवमादि
त:॥६७१॥ ॥ऋषिरुवाच॥१॥ एतत्तेकथितं
भूपदेवीमाहात्म्यमुत्तमम् ॥ २ ॥ एवंप्रभावा
सादेवीययेदंधार्यतेजगत् ॥ विद्यातथैवक्रिय
तेभगवद्विष्णुमायया ॥३॥ तयात्वमेषवैश्यश्च
तथैवान्येविवेकिन: ॥ मोह्यंतेमोहिताश्चैवमो 
हमेष्यंतिचापरे ॥ ४ ॥ तामुपैहिमहाराजशर

णंपरमेश्वरीम् ॥ आराधितासैवनृणांभोगस्व
र्गापवर्गदा ॥ ५ ॥ मार्कंडेय उवाच ॥ ६ ॥
इतितस्यवचःश्रुत्वासुरथःसनराधिपः ॥ प्रणिप
त्यमहाभागंतमृषिंसंशितव्रतम् ॥ ७ ॥ निर्वि
ण्णोतिममत्वेनराज्यापहरणेनच ॥ जगामस
द्यस्तपसेसचवैश्योमहामुने ॥ ८ ॥ संदर्शनार्थ
मंबायानदीपुलिनमास्थितः ॥ सचवैश्यस्तपस्ते
पेदेवीसूक्तंपरंजपन् ॥ ९ ॥ तौतस्मिन्पुलिनेदे

 व्याःकृत्वामूर्तिंमहीमयीम् ॥ अर्हणांचक्रतुस्त
स्याःपुष्पधूपाग्नितर्पणैः ॥ १० ॥ निराहारौयता
त्मानौतन्मनस्कौसमाहितौ ॥ ददतुस्तौबलिं
चैवनिजगात्रासृगुक्षितम् ॥ ११ ॥ एवंसमारा
धयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥ परितुष्टाजगद्धा
त्रीप्रत्यक्षंप्राहचंडिका ॥१२॥ देव्युवाच ॥१३॥
यत्प्रार्थ्यतेत्वयाभूपत्वयाचकुलनंदन ॥ मत्त 
स्तत्प्राप्यतांसर्वंपरितुष्टाददामिते ॥ १४ ॥ मा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.
र्कंडेयउवाच ॥ १५ ॥ ततोवव्रेनृपोराज्यमवि
भ्रंश्यन्यजन्मनि ॥ अत्रैवचनिजंराज्यंहतशत्रु
बलंबलात् ॥ १६ ॥ सोपिवैश्यस्ततोज्ञानंवव्रे
निर्विण्णमानसः ॥ ममेत्यहमितिप्राज्ञःसंगवि
च्युतिकारकम् ॥ १७ ॥ देव्युवाच ॥ १८ ॥
स्वल्पैरहोभिर्नृपते स्वंराज्यं प्राप्स्यते भवान्
॥ १९ ॥ हत्वारिपूनस्खलितंतवतत्रभविष्यति
॥ २० ॥ मृतश्चभूयःसंप्राप्यजन्मदेवाद्विवस्व

तः ॥ २१ ॥ सावर्णिकोमनुर्नाममभवान्भुविभ
 विष्यति ॥ २२ ॥ वैश्यवर्यत्वयायश्चवरोस्मत्तो
भिवांछितः ॥ २३ ॥ तंप्रयच्छामिसंसिद्ध्यैतव
ज्ञानंभविष्यति ॥ २४ ॥ मार्कंडेयउवाच ॥
॥ २५ ॥ इतिदत्वातयोर्देवीयथाभिलषितंवर
म् ॥ बभूवांतर्हितासद्योभक्त्यातावभ्यामभिष्टुता
॥ २६ ॥ एवंदेव्यावरंलब्ध्वा सुरथः क्षत्रियर्ष 
भः ॥ सूर्याज्जन्मसमासाद्यसावर्णिर्भवितामनुः

॥ २७ ॥ पुनः इतिदत्त्वातयो० ॥ २८ ॥ पुनः
एवंदेव्यावरं० ॥२९॥ क्लीं ॐ श्रीमार्कंडेयपुरा
णेसावर्णिकेमन्वंतरेदेवीमाहात्म्ये सुरथवैश्य
योर्वरप्रदानंनामत्रयोदशः ॥१३॥ उवाचमंत्राः
॥ ६ ॥ अर्धमंत्राः ॥ ७ ॥ श्लोकमंत्राः ॥ १६ ॥
एवं ॥ २९ ॥ एवमादितः ॥ ७०० ॥ ॥
अथोत्तरन्यासाः ॥ ॐह्रींहृद० ॐचंशिर० ॐ
डिंशिखायै० ॐकांकव० ॐयैंनेत्रत्र० ॐह्रींचं

डिकायैअस्त्राय० ॥ खड्गिनीशूलिनीघोरा०हृद
यायनमः ॥ शूलेनपाहिनोदेवि०शिरसेस्वाहा ॥
प्राच्यांरक्षप्रतीच्यांच० शिखायैवषट् ॥ सौ
म्यानियानिरूपाणि० कवचायहुं ॥ खड्गशूल
गदादीनि० नेत्रत्रयायवौषट् ॥ सर्वस्वरूपेसर्वे
शे० अस्त्रायफट् ॥ ॥ अथध्यानम् ॥ विद्युद्दा
मसमप्रभांमृगपतिस्कंधस्थितांभीषणांकन्या १३६
भिः करवालखेटविलसद्धस्ताभिरासेवितां ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

हस्तैश्चक्रदरालिखेटविशिखांश्चापंगुणंतर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां
भजे ॥ १ ॥ ॥ अथवैदिकंदेवीसूक्तं ॥ अहं
रुद्रेभिरित्यष्टर्चस्यसूक्तस्य वागांभृणीऋषिः ॥
श्रीआदिशक्तिर्देवता त्रिष्टुपूछंदः द्वितीयाज
गती श्रीजगदंबाप्रीत्यर्थेसप्तशतीजपांतेजपेवि
नियोगः ॥ ॐ अहंरुद्रेभिर्वसुभिश्चराम्यहमादि
त्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबिभर्म्यह

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 मिंद्राग्नीअहमश्विनोभा ॥ अहंसोमंमाहनसं 
 बिभर्म्यहंत्वष्टारमुतपूषणंभगं ॥ अहंदधामिद्र
विणंहविष्मंतेसुप्राव्ये ३ यजमानायसुन्वते ॥
अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञि
यानां ॥ तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभू
र्यावेशयंतीं॥ मयासोअन्नमत्तियोविपश्यतिय:
प्राणितियईशृणोत्युक्तं ॥ अमंतवोमांतउपक्षि 
यंतिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ अहमेवस्वय

मिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः।यंकामये
तंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधां १ अ
हंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाऽउ ॥
अहंजनायसमदंकृणोम्यहंद्यावापृथिवीआवि
वेश ॥ अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वं१
तःसमुद्रे ॥ ततोवितिष्ठेभुवनानुविश्वोतामूंद्यां
वर्ष्मणोपस्पृशामि ॥ अहमेववातइवप्रवाम्यार
भमाणाभुवनानिविश्वा ॥ परोदिवापरएनापृ

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



थिव्यैतावतीमहिनासंबभूव ॥२॥ अथतांत्रिकं
देवीसूक्तं ॥ नमोदेव्यैमहादेव्यैशिवायैसततंन
मः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां
॥१॥रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनमः॥
ज्योत्स्नायैचेंदुरूपिण्यैसुखायैसततंनमः ॥२॥
कल्याण्यैप्रणतामृद्ध्यैसिद्ध्यैकूर्म्यैनमोनमः ॥
नैर्ऋत्यैभूभृतांलक्ष्म्यैशर्वाण्यैतेनमोनमः ॥३॥
दुर्गायैदुर्गपारायैसारायैसर्वकारिण्यै ॥ ख्यात्यै

तथैवकृष्णायैधूम्रायैसततंनमः ॥ ४ ॥ अति
सौम्यातिरौद्रायैनतास्तस्यैनमोनमः ॥ नमोज
गत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥ ५ ॥ यादे
वीसर्वभूतेषुविष्णुमायेतिशब्दिता ॥ नमस्त
स्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ६ ॥ यादेवी
सर्वभूतेषुचेतनेत्यभिधीयते ॥ नमस्तस्यैनम
स्तस्यैनमस्तस्यैनमोनमः ॥ ७ ॥ यादेवीसर्वभू
तेषुबुद्धिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै

 

नमस्तस्यैनमोनमः ॥ ८ ॥ यादेवीसर्वभूतेषु
निद्रारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनम
स्तस्यैनमोनमः॥९॥यादेवीसर्वभूतेषुक्षुधारूपे
णसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमो
नमः ॥ १० ॥ यादेवीसर्वभूतेषुछायारूपेणसं
स्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः
॥११॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता ॥ 
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १२ ॥

यादेवीसर्वभूतेषुतृष्णारूपेणसंस्थिता ॥ नम
स्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १३ ॥ या
देवीसर्वभूतेषुक्षांतिरूपेणसंस्थिता ॥ नमस्तस्यै
नमस्तस्यैनमस्तस्यैनमोनमः ॥ १४ ॥ यादेवी
सर्वभूतेषुजातिरूपेणसंस्थिता ॥ नमस्तस्यैनम
स्तस्यैनमस्तस्यैनमोनमः ॥ १५ ॥ यादेवीस
र्वभूतेषुलज्जारूपेणसंस्थिता ॥ नमस्तस्यैनम
स्तस्यैनमस्तस्यैनमोनमः ॥ १६ ॥ यादेवीसर्व

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





भूतेषुशांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्त
स्यैनमस्तस्यैनमोनमः ॥ १७ ॥ यादेवीसर्वभू
तेषुश्रद्धारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ १८ ॥ यादेवीसर्वभूतेषु
कांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनम
स्तस्यैनमोनमः ॥ १९ ॥ यादेवीसर्वभूतेषुल
क्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनम १४०
स्तस्यैनमोनमः ॥ २० ॥ यादेवीसर्वभूतेषुवृ

त्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्त
स्यैनमोनमः ॥ २१ ॥ यादेवीसर्वभूतेषुस्मृति
रूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यै
नमोनमः ॥ २२ ॥ यादेवीसर्वभूतेषुदयारूपे
णसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमो
नमः ॥ २३ ॥ यादेवीसर्वभूतेषुतुष्टिरूपेणसं
स्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन
मः ॥ २४ ॥ यादेवीसर्वभूतेषुमातृरूपेणसंस्थि

ता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः
॥ २५ ॥ यादेवीसर्वभूतेषुभ्रांतिरूपेणसंस्थि
ता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः
॥ २६ ॥ इंद्रियाणामधिष्ठात्रीभूतानांचाखिले
षुया ॥ भूतेषुसततंतस्यैव्याप्त्यैदेव्यैनमोनमः
॥ २७ ॥ चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिता
जगत् ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन
मः ॥ २८ ॥ स्तुतासुरैःपूर्वमभीष्टसंश्रयात्तथा

सुरेंद्रेणदिनेषुसेविता ॥ करोतुसानःशुभहेतुरी
श्वरीशुभानिभद्राण्यभिहंतुचापदः ॥ २९ ॥
यासांप्रतंचोद्धतदैत्यतापितैरस्माभिरीशाचसु
रैर्नमस्यते ॥ याचस्मृतातत्क्षणमेवहंतिनःसर्वा
पदोभक्तिविनम्रमूर्तिभिः ॥ ३० ॥ इतिदेवीसू
क्तंपठित्वाऽष्टोत्तरशतंनवार्णजपंकृत्वातदुत्तर
न्यासान्विधाय ॥ गुह्यातिगुह्यगोप्त्रीत्वंगृहाणा
स्मत्कृतंजपम् ॥ सिद्धिर्भवतुमेदेवित्वत्प्रसादा

न्महेश्वरि ॥ ३१ ॥ देव्यावामहस्तेजपंनिवेदये
त् ॥ प्राधानिकरहस्यं ॥ अस्य श्रीसप्तशतीरहस्य
त्रयस्यब्रह्मविष्णुरुद्राऋषयः ॥ श्रीमहाकालीम
हालक्ष्मीमहासरस्वत्योदेवताः अनुष्टुप्छंदः ॥
नवदुर्गामहालक्ष्मीर्बीजं श्रींशक्तिःममाभीष्टफ
लसिद्धयेसप्तशतीपाठांते जपे विनियोगः ॥ रा
जोवाच ॥ भगवन्नवतारामेचंडिकायास्त्वयो १४२
दिताः ॥ एतेषांप्रकृतिंब्रह्मन्प्रधानंवक्तुमर्हसि

॥ १ ॥ आराध्यंयन्मयादेव्याःस्वरूपंयेनवौद्वि
ज ॥ विधिनाब्रूहिसकलंयथावत्प्रणतस्यमे
॥ २ ॥ ऋषिरुवाच ॥ इदंरहस्यंपरममनाख्येयं
प्रचक्ष्यते ॥ भक्तोसीतिनमेकिंचित्तवावाच्यंन
राधिप ॥ ३ ॥ सर्वस्याद्यामहालक्ष्मीस्त्रिगुणापर
मेश्वरी ॥ लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नं
व्यवस्थिता ॥ ४ ॥ मातुलिंगंगदांखेटंपानपा
त्रंचबिभ्रती ॥ नागंलिंगंचयोनिंचबिभ्रतीनृप

मूर्धनि ॥ ५ ॥ तप्तकांचनवर्णाभातप्तकांचन
भूषणा ॥ शून्यंतदखिलंस्वेनपूरयामासतेजसा
॥ ६ ॥ शून्यंतदखिलंलोकंविलोक्यपरमेश्वरी
॥ बभाररूपमपरंतमसाकेवलेनहि ॥ ७ ॥
साभिन्नांजनसंकाशादंष्ट्रांचितवरानना ॥ वि
शाललोचनानारीबभूवतनुमध्यमा ॥ ८ ॥ ख
ड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा ॥ कबंध
हारंशिरसाबिभ्राणाहिशिरःस्रजम् ॥ ९ ॥ तां

प्रोवाचमहालक्ष्मीस्तामसींप्रमदोत्तमाम् ॥ ८
दामितवनामानियानिकर्माणितानिते ॥ १० ॥
महामायामहाकालीमहामारीक्षुधातृषा ॥ नि
द्रातृष्णाचैकवीराकालरात्रिर्दुरत्यया ॥ ११ ॥
इमानितवनामानिप्रतिपाद्यानिकर्मभिः ॥ ए
भिःकर्माणितेज्ञात्वा योऽधीते सोऽश्नुतेसुखम्
॥ १२ ॥ तामित्युक्त्वामहालक्ष्मीःस्वरूपमपरं
नृप ॥ सत्त्वाख्येनातिशुद्धेन गुणेनेंदुप्रभंदधौ

॥ १३ ॥ अक्षमालांकुशधरावीणापुस्तकधारि

णी ॥ साबभूववरानारीनामान्यस्यैचसाददौ
॥ १४ ॥ महाविद्यामहावाणीभारतीवाक्सर
स्वती ॥ आर्याब्राह्मीकामधेनुर्वेदगर्भासुरेश्वरी
॥ १५ ॥ अथोवाचमहालक्ष्मीर्महाकालींसरस्व
तीं ॥ युवांजनयतांदेव्यौमिथुनेस्वानुरूपतः
॥ १६ ॥ इत्युक्त्वातेमहालक्ष्मीःससर्जमिथुनं

स्वयं ॥ हिरण्यगर्भौरुचिरौस्त्रीपुंसौकमलासनौ

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ १७ ॥ ब्रह्मन्विधेविरंचेतिधातरित्याहतंनर
म् ॥ श्रीःपद्मेकमलेलक्ष्मीत्याहमातास्त्रियंचतां
॥ १८ ॥ महाकालीभारतीचामिथुनेसृजतःस
ह ॥ एतयोरपिरूपाणिनामानिचवदामिते
॥ १९ ॥ नीलकंठंरक्तबाहुंश्वेतांगंचंद्रशेखरम् ॥
जनयामासपुरुषंमहाकालीसितांस्त्रियं ॥ २० ॥
सरुद्रःशंकरःस्थाणुःकपर्दीचत्रिलोचनः ॥ त्र
यीविद्याकामधेनुःसास्त्रीभाषास्वराक्षरा ॥२१॥

स.१३

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सरस्वतीस्त्रियंगौरींकृष्णंचपुरुषंनृप ॥ जनया
मासनामानितयोरपिवदामिते ॥ २२ ॥ वि
ष्णुःकृष्णोहृषीकेशोवासुदेवोजनार्दनः ॥ उमा
गौरीसतीचंडीसुंदरीसुभगाशुभा ॥ २३ ॥ ए
वंयुवतयःसद्यःपुरुषत्वंप्रपेदिरे ॥ चक्षुष्मंतोनु
पश्यंतिनेतरेतद्विदोजनाः ॥ २४ ॥ ब्रह्मणेप्रद
दौपत्नींमहालक्ष्मींनृपत्रयीं ॥ रुद्रायगौरींवरदां
वासुदेवायचश्रियम् ॥ २५ ॥ स्वरयासहसंभू

यविरंचौऽडमजीजनत् ॥ बिभेदभगवान्रुद्र
स्तद्गौर्यासहवीर्यवान् ॥ २६ ॥ अंडमध्येप्रधा
नादिकार्यजातमभून्नृप ॥ महाभूतात्मकंसर्वं
जगत्स्थावरजंगमम् ॥ २७ ॥ पुपोषपालयामा
सतल्लक्ष्म्यासहकेशवः ॥ महालक्ष्मीरेवमजारा
जन्सर्वेश्वरेश्वरी ॥ २८ ॥ निराकाराचसाकारा
सैवनानाभिधानभृत् ॥ नामांतरैर्निरूप्यैषाना
म्नानान्येनकेनचित् ॥ २९ ॥ मार्कंडेयपु० प्राधा

निकंरहस्यं ॥ ॥ अथवैकृतिकंरहस्यं ॥ ऋषिरु
१४६ वाच ॥ त्रिगुणातामसीदेवी सात्विकीयात्वयो
दिता ॥ साशर्वाचंडिकादुर्गाभद्राभगवतीर्यते
॥ १ ॥ योगनिद्राहरेरुक्तामहाकालीतमोगुणा
॥ मधुकैटभनाशार्थयांतुष्टावांबुजासनः ॥ २ ॥
दशवक्त्रादशभुजादशपादांजनप्रभा ॥ विशा
लयाराजमानात्रिंशल्लोचनमालया ॥ ३ ॥ स्फु १४६
रद्दशनदंष्ट्रासाभीमरूपापिभूमिप ॥ रूपसौ

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.
भाग्यकांतीनांसाप्रतिष्ठामहाश्रियां ॥ ४ ॥ ख
ड्गबाणगदाशूलशंखचक्रभुशुंडिभृत् ॥ परिघं
कार्मुकंशीर्षंनिश्चोतद्रुधिरंदधौ ॥ ५ ॥ एषा
सावैष्णवीमायामहाकालीदुरत्यया ॥ आरा
धितावशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥ स
र्वदेवशरीरेभ्योयाविर्भूताऽमितप्रभा ॥ त्रिगु
णासामहालक्ष्मीः साक्षान्महिषमर्दिनी ॥ ७ ॥
श्वेताननानीलभुजासुश्वेतस्तनमंडला ॥ रक्त

मध्यारक्तपादारक्तजंघोरुरुन्मदा ॥ ८ ॥ सु
चित्रजघनाचित्रमाल्यांबराविभूषणा ॥ चि
त्रानुलेपनाकांतिरूपसौभाग्यशालिनी ॥ ९ ॥
अष्टादशभुजापूज्यासासहस्रभुजासती ॥ आ
युधान्यत्रवक्ष्यंतेदक्षिणाधःकरक्रमात् ॥ १० ॥
अक्षमालाचकमलंबाणोसिःकुलिशंगदा ॥ च
क्रंत्रिशूलंपरशुःशंखोघंटाचपाशकः ॥ ११ ॥
शक्तिर्दंडश्चर्मचापंपानपात्रंकमंडलुः ॥ अलं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

कृतभुजामेभिरायुधैःकमलासनां ॥ १२ ॥ स
र्वदेवमयीमीशांमहालक्ष्मीमिमांनृप ॥ पूजये
त्सर्वलोकानांसदेवानांप्रभुर्भवेत् ॥ १३ ॥ गौ
रीदेहात्समुद्भूतायासत्त्वैकगुणाश्रया ॥ साक्षा
त्सरस्वतीप्रोक्ताशुंभासुरनिबर्हिणी ॥ १४ ॥ द
धौचाष्टभुजाबाणान्मुसलंशूलचक्रभृत् ॥ शं
खंघंटांलांगलंचकार्मुकंवसुधाधिप ॥ १५ ॥
एषासंपूजिताभक्त्यासर्वज्ञत्वंप्रयच्छति ॥ नि

स० शुंभमाथिनीदेवीशुंभासुरनिबर्हिणी ॥ १६ ॥ इ वै.
१४८ त्युक्तानिस्वरूपाणिमूर्तीनांतवपार्थिव ॥ उपा रह.
सनंजगन्मातुःपृथगासांनिशामय ॥ १७ ॥ म
हालक्ष्मीर्यदापूज्यामहाकालीसरस्वती ॥ दक्षि
णोत्तरयोः पूज्येपृष्ठतोमिथुनत्रयम् ॥ १८ ॥ वि
रंचिः स्वरयामध्येरुद्रोगौर्याचदक्षिणे ॥ वामेल
क्ष्म्याहृषीकेशःपुरतोदेवतात्रयम् ॥ १९ ॥ अ १४९
ष्टादशभुजामध्येवामेचास्यादशानना ॥ दक्षि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

णेष्टभुजालक्ष्मीर्महतीतिसमर्चयेत् ॥२०॥ अ
ष्टादशभुजाचैषायदापूज्यानराधिप ॥ दशान
नाचाष्टभुजादक्षिणोत्तरयोस्तदा ॥ २१ ॥ का
लमृत्यूचसंपूज्यौसर्वारिष्टप्रशांतये ॥ यदाचा
ष्टभुजापूज्याशुंभासुरनिबर्हिणी ॥ २२ ॥ नवा
स्याःशक्तयःपूज्यास्तदारुद्रविनायकौ ॥ नमो
देव्याइतिस्तोत्रैर्महालक्ष्मींसमर्चयेत् ॥ २३ ॥
अवतारत्रयार्चायां स्तोत्रमंत्रास्तदाश्रयाः ॥ अ

ष्टादशभुजाचैषापूज्यामहिषमर्दिनी ॥ २४ ॥
महालक्ष्मीर्महाकालीसैवप्रोक्तासरस्वती ॥ ई
श्वरीपुण्यपापानांसर्वलोकमहेश्वरी ॥ २५ ॥ म
हिषांतकरीयेनपूजितासजगत्प्रभुः ॥ पूजयेज्ज
गतांधात्रींचण्डिकांभक्तवत्सलाम् ॥ २६ ॥ अ
र्घादिभिरलंकारैर्गंधपुष्पैस्तथोत्तमैः ॥ धूपैर्दी
पैश्चनैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २७ ॥ रुधि
राक्तेनबलिनामांसेनसुरयानृप ॥ प्रणामाचम

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

नीयेनचंदनेनसुगंधिना ॥२८॥ सकर्पूरैश्चतांबू
लैर्भक्तिभावसमन्वितैः ॥ वामभागेग्रतोदेव्या
श्छिन्नशीर्षमहासुरम् ॥ २९ ॥ पूजयेन्महिषं
येनप्राप्तंसायुज्यमीशया ॥ दक्षिणेपुरतःसिंहं
समग्रंधर्ममीश्वरम् ॥ ३० ॥ वाहनंपूजयेद्देव्या
धृतंयेनचराचरम् ॥ ततःकृतांजलिर्भूत्वास्तु
वीतचरितैरिमैः ॥ ३१ ॥ एकेनवामध्यमेननै
केनेतरयोरिह ॥ चरितार्धंतुनजपेज्जपञ्छिद्रम

वाप्नुयात् ॥ ३२ ॥ स्तोत्रमंत्रैःस्तुवीतेमांयदि
वाजगदंबिकाम् ॥ प्रदक्षिणानमस्कारान्कृत्वा
मूर्ध्निकृतांजलिः ॥ ३३ ॥ क्षमापयेज्जगद्धात्रीं
मुहुर्मुहुरतंद्रितः ॥ प्रतिश्लोकंचजुहुयात्पायसं
तिलसर्पिषा ॥ ३४ ॥ जुहुयात्स्तोत्रमंत्रैर्वाचंडि
कायैशुभंहविः ॥ नमोनमःपदैर्देवींपूजयेत्सुस
माहितः ॥ ३५ ॥ प्रयतःप्रांजलिःप्रह्वःप्राणा
नारोप्यचात्मनि ॥ सुचिरंभावयेद्देवींचंडिकां

तन्मयोभवेत् ॥ ३६ ॥ एवंयःपूजयेद्भक्त्याप्र
त्यहंपरमेश्वरीं ॥ भुक्त्वाभोगान्यथाकामं देवी
सायुज्यमाप्नुयात् ॥ ३७ ॥ योनपूजयतेनित्यं
चंडिकांभक्तवत्सलाम् ॥ भस्मीकृत्यास्यपुण्या
निनिर्दहेत्परमेश्वरी ॥ ३८ ॥ तस्मात्पूजयभूपा
लसर्वलोकमहेश्वरीं ॥ यथोक्तेनविधानेनचंडि
कांसुखमाप्स्यसि ॥ ३९ ॥ मार्कंडेयपु० वैकृतिकं
रहस्यं ॥ ॥ अथमूर्तिरहस्यं ॥ ऋषिरुवाच ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

स० नंदाभगवतीनामयाभविष्यतिनंदजा ॥ सास्तु मू० रह०
१५१ तापूजिताध्यातावशीकुर्याज्जगत्त्रयम् ॥ १ ॥ कन
कोत्तमकांतिःसासुकांतिकनकांबरा ॥ देवीक
नकवर्णाभाकनकोत्तमभूषणा ॥ २ ॥ कमलां
कुशपाशाब्जैरलंकृतचतुर्भुजा ॥ इंदिराकम
लालक्ष्मीःसाश्रीरुक्मांबुजासना ॥ ३ ॥ यार
क्तदंतिकानामदेवीप्रोक्तामयानघ ॥ तस्याःस्व १५१
रूपंवक्ष्यामिशृणुसर्वभयापहम् ॥ ४ ॥ रक्तांबरा

रक्तवर्णारक्तसर्वांगभूषणा ॥ रक्तायुधारक्तने
त्रारक्तकेशातिभीषणा ॥ ५ ॥ रक्ततीक्ष्णन
खारक्तदशनारक्तदंष्ट्रिका ॥ पतिंनारीवानुर
क्तादेवीभक्तंभजेज्जनम् ॥ ६ ॥ वसुधेवाविशा
लासासुमेरुयुगलस्तनी ॥ दीर्घौलंबावतिस्थूलौ
तावतीवमनोहरौ ॥ ७ ॥ कर्कशावतिकांतौतौ
सर्वानंदपयोनिधी ॥ भक्तान्संपाययेद्देवीसर्व
कामदुघौस्तनौ ॥ ८ ॥ खड्गपात्रंचमुसलंलांग

लंचबिभर्तिसा ॥ आख्यातारक्तचामुंडादेवी 
योगेश्वरीतिच ॥ ९ ॥ अनयाव्याप्तमखिलंजग
त्स्थावरजंगमम् ॥ इमांयःपूजयेद्भक्त्यासव्या
प्नोतिचराचरम् ॥ १० ॥ अधीतेयइमंनित्यंरक्त
दंत्यावपुःस्तवम् ॥ तंसापरिचरेद्देवीपतिंप्रिय
मिवांगना ॥ ११ ॥ शाकंभरीनीलवर्णानीलो
त्पलविलोचना ॥ गंभीरनाभिस्त्रिवलीविभूषि 
ततनूदरी ॥ १२ ॥ सुकर्कशसमोत्तुंगवृत्तपीन

घनस्तनी ॥ मुष्टिंशिलीमुखैःपूर्णंकमलंकमला
लया ॥१३॥ पुष्पपल्लवमूलादिफलाढ्यंशाकसं
चयम् ॥ काम्यानंतरसैर्युक्तंक्षुत्तृण्मृत्युजरापहं
॥ १४ ॥ कार्मुकंचस्फुरत्कांतिबिभर्तिपरमेश्व
री ॥ शाकंभरीशताक्षीस्यात्सैवदुर्गाप्रकीर्ति
ता ॥ १५ ॥ शाकंभरींस्तुवन्ध्यायन्जपन्संपू
जयन्नमन् ॥ अक्षय्यमश्नुतेशीघ्रमन्नपानादि
सर्वशः ॥ १६ ॥ भीमापिनीलवर्णासादंष्ट्रादश

नभासुरा ॥ विशाललोचनानारीवृत्तपीनघन
स्तनी ॥ १७ ॥ चंद्रहासंचडमरुंशिरःपात्रंच
बिभ्रती ॥ एकवीराकालरात्रिःसैवोक्ताकामदा
स्तुता ॥ १८ ॥ तेजोमंडलदुर्धर्षाभ्रामरीचित्र
कांतिभृत् ॥ चित्रभ्रमरसंकाशामहामारीति
गीयते ॥ १९ ॥ इत्येतामूर्तयोदेव्या व्याख्या
ता वसुधाधिप ॥ जगन्मातुश्चंडिकायाःकी
र्तिताःकामधेनवः ॥ २० ॥ इदंरहस्यंपरमंनवा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

च्यंयस्यकस्यचित् ॥ व्याख्यानंदिव्यमूर्तीनाम
धीष्वावहितःस्वयम् ॥ २१ ॥ देव्याध्यानंतवा
ख्यातंगुह्याद्गुह्यतरंमहत् ॥ तस्मात्सर्वप्रयत्नेन
सर्वकामफलप्रदम् ॥२२॥ मार्कंडेयपुराणेस्वि
लांशेमूर्तिरहस्यम् ॥ ॥ अथोत्तरविधिः ॥
पुनरुत्कीलनमंत्रजपः ॥ ॥ ॐश्रींक्लींह्रींसप्तश
तिचंडिकेउत्कीलनंकुरुकुरुस्वाहा २१ श्रीमहा
कालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थंयं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

 त्रस्थदेवतानांपाठोक्तरांगपंचोपचारपूजनंक० 
 अस्यश्रीनवार्ण०पाठोक्तरांगपूजनेविनियोगः ॥
मूलमंत्रेणावाहितदेवताःसंपूज्यअपराधसह०
आवाहनं० मंत्रहीनं० मत्समोनास्ति० अज्ञाना
द्विस्मृतेर्भ्रां० ॥ कामेश्वरिजगन्मातःसच्चिदानं
दविग्रहे ॥ गृहाणार्चामिमांप्रीत्याप्रसीदपरमे
श्वरि।३।अपराधशतंकृत्वाजगदंबेतिचोच्चरेत्॥ 
यांगतिंसमवाप्नोतिनतांब्रह्मादयःसुराः ॥ ४ ॥

सापराधोस्मिशरणंप्राप्तस्त्वांजगदंबिके ॥ इदा
नीमनुकंप्योहंयथेच्छसितथाकुरु ॥ ५ ॥ गुह्या
तिगुह्यगोप्त्रीत्वंगृहाणास्मत्कृतंजपं ॥ सिद्धिर्भ
वतुमेदेवित्वत्प्रसादात्सुरेश्वरि ॥ इतिप्रार्थ्य ॥
अनेनपूर्वसंकल्पितशतचंडीसंख्यापरिपूर्तये
नवचंडीसंख्यापरिपूर्तये वा कवचार्गलाकील
कनवार्णमंत्राष्टोत्तरशतजपरात्रिसूक्तपठनपूर्व
कंदेवीसूक्तनवार्णमंत्राष्टोत्तरशतजपरहस्यत्रय

जपांतंश्रीचंडीसप्तशत्याःपाठाख्येनकर्मणा ॥
 अथवा सपल्लवे चंडीसप्तशत्याः प्रतिमंत्रांते
अमुकमंत्रपल्लवितायाः पाठा० कर्मणा अथवा
श्रीचंडीसप्तशत्याः प्रतिमंत्रादौ अमुकमंत्रयो
जितायाः पाठाख्येनकर्मणा अथवा श्रीचंडी
सप्तशत्याः प्रतिमंत्रे आद्यंतयोःअमुकमंत्रसंपु
टितायाःपाठाख्येनकर्मणाभगवतीश्रीमहाका 
ली० ३ स्वरूपिणीअमुकदेवताप्रीयतां॥ आच

मनं ॥ ॐ ऐं आत्मतत्त्वंशोधयामिनमःस्वाहा ॥
ॐ ह्रीं विद्यातत्त्वंशोधयामिनमःस्वाहा ॥ ॐ क्लीं
शिवतत्त्वंशोधयामिनमःस्वाहा ॥ ॐ ॐ ऐंह्रींक्लीं
सर्वतत्त्वंशोधयामिनमःस्वाहा इत्येवंद्विराचम
नंविधाय ॥ यदक्षरपदभ्रष्टं० विसर्गबिंदुमात्रा
श्च० इतिसंप्रार्थ्य ॐ स्वः भुवः भूः ॐ इति
आसनाधोजलमृदास्वललाटे तिलकंकृत्वाय
थासुखं विहरेदितिशिवं ॥ ॥ एवंधौरेयकुलो

त्पन्नश्रीकृष्णशर्मणारचिता ॥ पद्धतिरनया
भूयाच्छ्रीदुर्गा प्रीतमानसासदया ॥१॥ यथाम
तिविचार्येऽयंसप्तशत्याःसुपद्धतिः ॥ कृताम
याबुधैःशोध्यासदयैश्चाविमत्सरैः ॥ २ ॥ ॥

इति सप्तशती सपरिकरा संपूर्णा ॥

# अथ सप्तशतीपल्लवयोजनाप्रकारः ॥

## ॥ जगदंबा प्रसन्ना ॥

॥ त्रयोदशं १३ प्रथमं १ द्वादशं १२ द्वितीयं २ ॥ एकादशं ११ तृतीयं ३ दशमं १० चतुर्थं ४ नवमं ९ पंचमं ५ अष्टमं ८ षष्ठं ६ सप्तमं द्विवारं ( सप्तशतीअध्यायक्रममितिशापविमोचनं ) अथोत्कीलनं कात्यायनीतंत्रोक्तं ॥ मध्यमचरित्रं प्रथमं. प्रथमचरित्रंद्वितीयं. उत्तमचरित्रंतृतीयं ॥ अथप्रयोगविधिः॥ तत्रप्रयोगान्तराणिकात्यायनीतंत्रोक्तानि ॥ प्रतिश्लोकमाद्यंतयोःप्रणवंजपेन्मन्त्र-

सिद्धिः ॥ १ ॥ अग्रेसर्वत्रश्लोकपदंमंत्रोपलक्षणम् ॥ सप्रणवमनुलोमव्याहृतित्रयमा-
दौअन्तेतुविलोमंतदित्येवं प्रतिश्लोकं कृत्वाशतावृत्तिपाठेऽतिशीघ्रंसिद्धिः ॥ २ ॥
प्रतिश्लोकमादौजातवेदसइत्यृचंपठेत्सर्वकामसिद्धिः ॥ ३ ॥ अथमृत्युनिवारणाय-
त्र्यंबकमन्त्रंपठेत् ॥ आदावंतेचशतमित्यर्थः ॥ प्रतिश्लोकंतन्मंत्रजपइत्यन्यत्र ॥४॥
प्रतिश्लोकंशूलेनपाहिनोदेवीतिपाठादपमृत्युनाशः ॥ अस्यश्लोकस्य लक्षमयुतंसहस्रं-
शतंवाजपेअपमृत्युवारणं ॥ ५ ॥ प्रतिश्लोकंशरणागतदीनार्तेतिश्लोकंपठेत्सर्वकार्य
सिद्धिः ॥ ६ ॥ प्रतिश्लोकंकरोतुसानः शुभेत्यर्थंपठेत्सर्वकार्यसिद्धिः ॥ ७ ॥
स्वाभीष्टवरप्राप्तयेएवंदेव्यावरंलब्ध्वेतिश्लोकंपठेत् ॥ ८ ॥ सर्वापत्तिवारणायप्रति-
श्लोकंदुर्गेस्मृतेतिपठेत् ॥ अस्यकेवलस्यापिश्लोकस्यकार्यानुसारेणलक्षमयुतंसहस्रं-
शतंवाजपः ॥ ९ ॥ सर्वाबाधेत्यस्यलक्षजपेप्रतिश्लोकपाठेवाश्लोकोक्तंफलम् ॥१०॥
इत्थंयदायदाबाधेतिश्लोकजपेमहामारीशान्तिः ॥ ११ ॥ ततोवव्रेनृपोराज्यमिति-
मन्त्रस्यजपेपुनःस्वराज्यलाभः ॥ १२ ॥ हिनस्तिदैत्यतेजांसीत्यनेन सदीपवलिदा-
नेनघण्टाबंधनेनचबालग्रहशान्तिः ॥ १३ ॥ आद्यावृत्तिअनुलोमेनपठित्वाततोवि-

परीतक्रमेणद्वितीयामनुलोमेनतृतीयामित्येवमावृत्तित्रयेण शीघ्रंकार्यसिद्धिः ॥१४॥ सर्वापत्तिवारणायदुर्गेस्मृतेत्यर्धंततोयदन्तियच्चदूरकेइत्यृचंतदन्तेदारिद्र्यदुःखेत्यर्धमेवंकार्यानुसारेणलक्षमयुतंसहस्रंशतंवाजपः ॥ १५ ॥ कांसोस्मीत्यृचंप्रतिश्लोकंपठेल्लक्ष्मीप्राप्तिः ॥ १६ ॥ प्रतिश्लोकमनृणाअस्मिन्नित्यृचंपठेदृणपरिहारः ॥ १७ ॥ मारणार्थमेवमुक्त्वासमुत्पत्त्येतिश्लोकंप्रतिश्लोकंपठन्मारणोक्तावृत्तिभिःफलसिद्धिः ॥ १८ ॥ ज्ञानिनामपिचेतांसिइतिश्लोकजपमात्रेणसद्योमोहनमित्यनुभवसिद्धम् ॥ प्रतिश्लोकंतच्छ्लोकपाठेत्ववश्यम् ॥ १९ ॥ रोगानशेषानितिश्लोकस्यप्रतिश्लोकंपाठेसकलरोगनाशः ॥ तन्मात्रंजपेऽपिसः ॥ २० ॥ इत्युक्तासातदादेवीगम्भीरेतिश्लोकस्यप्रतिश्लोकंपाठेपृथग्जपेवाविद्याप्राप्तिर्वाग्वैकृतनाशश्च ॥ २१ ॥ भगवत्याकृतंसर्वमित्यादिद्वादशोत्तरशताक्षरोमंत्रःसर्वकामदःसर्वापत्तिवारणश्च ॥ २२ ॥ देविप्रपन्नार्तिहरेइतिश्लोकस्ययथाकार्यंलक्षायुतसहस्रशतान्यतमसंख्ययाजपेप्रतिश्लोकंपाठेवासर्वापन्निवृत्तिःसर्वकामाप्तिश्च ॥ एषुप्रयोगेषुप्रतिश्लोकंदीपाग्रेकेवलमेवनमस्कारेणातिशीघ्रंसिद्धिः ॥ प्रतिश्लोकंकामबीजसंपुटितस्यएकचत्वारिंशद्दिनंत्रिरावृत्तौ-

सर्वकामसिद्धिः ॥ २३ ॥ एकविंशतिदिनपर्यंतमुक्तरीत्याप्रत्यहंद्वादशावृत्तौवशीकरणम् ॥ २४ ॥ मायाबीजसंपुटितस्यफट्पल्लवसहितस्यसप्तदिनपर्यंतंत्रयोदशावृत्तौउच्चाटनसिद्धिः ॥ २५ ॥ तादृश्याएवदिनचतुष्टयमेकादशावृत्तौसर्वोपद्रवनाशः ॥ २६ ॥ एकोनपञ्चाशद्दिनपर्यंतंप्रतिश्लोकंश्रीबीजसंपुटितस्यपञ्चदशावृत्तौलक्ष्मीप्राप्तिः ॥ २७ ॥ प्रतिश्लोकंवाग्बीजसंपुटितस्यशतावृत्तौविद्याप्राप्तिः ॥ २८ ॥

श्रीक्षेत्रत्र्यंबकस्थदीक्षितइत्युपाह्वत्र्यंबकात्मजचिन्तामणिशर्मणा नानाग्रन्थानालोच्यैकीकृत्य शेडगेइत्युपाह्वरामचन्द्रायार्पितं मुद्रणार्थं तेन

तुष्यतु ममेष्टश्रीजगदंबा ॥ शुभं ॥

सन १९३७.

---

पब्लिशर—पांडुरंग जावजी.
प्रिंटर—रामचंद्र येसू शेडगे.
निर्णयसागर प्रेस, नं० २६—२८ कोलभाट स्ट्रीट, मुंबई.

# अथ नवचंडीशतचंडीसहस्रचंडीप्रयोगः ।

श्रीगणेशायनमः ॥ यजमानःशुभदिनेसपत्नीकस्तिलतैलेनकृताभ्यंगः स्नात्वा संपूर्णकलशहस्तोमंडपंप्रदक्षिणीकृत्य पश्चिमद्वारेणप्रविश्योपविश्य देशकालौस्मृत्वा ममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधन धान्यपुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्ट सिद्ध्यर्थं ममामुककार्यसिद्ध्यर्थं वा सनवग्रहमखांनवचंडींशतचंडीं सहस्रचंडीं वा ब्राह्मणद्वाराकरिष्ये ॥ तदंगतयागणेशपूजनंपुण्याहवाचनंमातृकापूजनं नांदीश्राद्धमाचार्यादिवरणंचकरिष्ये ॥ इतिसंकल्प्य तानिकृत्वा आचार्यादीन्वृत्त्वातान्यथाविभवंवस्त्रादिनासंपूज्यप्रार्थयेच्च ॥ तेचशतचंड्यांदश ॥ सहस्रचंड्यांशतं ॥ केचिदत्रग्रहजपार्थमेकमृत्विजंवरयंति ॥ ॥ अथाचार्य आचम्यदेशकालौसंकीर्त्ययजमानेनवृतोहमाचार्यकर्मकरिष्ये इति संकल्प्य यदत्रेतिगौरसर्षपान्विकीर्यपंचगव्येनकुशोदकेनवा मंडपंप्रोक्षेत् ॥ शुचीवो

हव्या० आपोहिष्ठा० अपवित्रः० ॥ पृथ्वित्वया० इत्युपविश्य अनंतास
नायनमः ॥ विमलासनाय० ॥ पद्मासनाय० ॥ अपक्रामंतु० इतिभूमौवा
मपादघातत्रयंकृत्वायथोपदेशंविस्तरतः संक्षेपेणवा भूतशुद्ध्यादिकृत्वा नवार्ण
विध्युक्तैकादशन्यासान्कुर्यात् ॥ अथवैकादशमेवैकंन्यासंकुर्यात् ॥ ततो
योनिमुद्रांप्रदर्श्यध्यायेत् ॥ श्वेताननानीलभुजासुश्वेतस्तनमंडला ॥ रक्तम
ध्यारक्तपादानीलजंघोरुरुन्मदा ॥ सुचित्रजघनाचित्रमाल्यांबरविभूषणा ॥
चित्रानुलेपनाकांतिरूपसौभाग्यशालिनी ॥ अष्टादशभुजापूज्यासासहस्र
भुजासती ॥ आयुधान्यत्रवक्ष्यंतेदक्षिणाधःकरक्रमात् ॥ अक्षमालाचकम
लं बाणोसिःकुलिशंगदा ॥ चक्रंत्रिशूलंपरशुःशंखोघंटाचपाशकः ॥ शक्ति
दंडश्चर्मचापंपानपात्रंकमंडलुरिति ॥ ततोवेद्यांसर्वतोभद्रमष्टदलंवाविलि
ख्य तत्रब्रह्मादिमंडलदेवताः संस्थाप्य तन्मध्येमहीद्यौरित्यादिमंत्रैः कलशं
संस्थाप्य तस्मिन्गंधपुष्पफलसर्वौषधीदूर्वापंचपल्लवसप्तमृत्तिकास्तत्तन्मंत्रेणनि

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

क्षिप्यवस्त्रद्वयेनावेष्ट्य तदुपरिपूर्णपात्रंनिधाय कलशेवरुणमावाह्य पूजयेत् ॥ ततःकलशेदेवताः स्मरेत् ॥ कलशस्यमुखेविष्णुः० देवदानवसंवादेमथ्य० प्रसन्नोभवसर्वदाइतिकलशंप्रार्थयेत् ॥ तथाकलशोपरिस्थपूर्णपात्रेवस्त्रेयंत्रं लिखेत् ॥ तद्यथा ॥ मध्येत्रिकोणंतद्बहिः षट्कोणंतद्बाह्येवृत्तंतद्बाह्येष्टौदलानि तद्बाह्येचतुर्द्वारंचतुरस्रत्रयमिति एवंयंत्रंविलिख्य तत्राष्टादशभुजां अष्टभु जांवा सिंहारूढांसौवर्णींदेवीमूर्तिमग्न्युत्तारणप्राणप्रतिष्ठापूर्वकंप्रतिष्ठाप्य पूज येत् ॥ तद्यथा ॥ स्ववामेकर्पूरादियुतजलपूर्णकलशंसंपूज्य कलशस्यमुखे० गंगेचयमुने० इत्यादिपठित्वा कलशमुद्रांप्रदर्श्य दक्षिणतःशंखंसंपूज्य ॥ शंखंचंद्रार्कदैवत्यमित्यादिपठित्वा शंखमुद्रांप्रदर्श्य शंखोदकेनात्मानंपूजाद्र व्याणिचप्रोक्षेत् ॥ अपवित्रः पवित्रोवा० ॥ पीठपूजां कुर्यात् ॥ देवीदक्षिणे गुंगुरुभ्योनमः ॥ पंपरमगुरुभ्योनमः ॥ पं परात्परगुरुभ्योनमः ॥ पं परमे ष्ठिगुरुभ्योनमः ॥ वामे गं गणपतयेनमः ॥ दुं दुर्गायैनमः ॥ क्षं क्षेत्रपा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





लाय० ॥ मध्ये आधारशक्त्यैनमः ॥ मूलप्रकृत्यै० ॥ कालाग्निरुद्राय० ॥
महामंडूकाय० कूर्माय० वराहाय० अनंताय० भूम्यै० अमृतार्णवाय०
रत्नद्वीपाय० हेमगिरये० नंदनोद्यानाय० मणिभूम्यै० रत्नमंडपाय० कल्प
तरवे० रत्नसिंहासनाय० ॥ आग्नेय्यादिकोणेषु धर्माय० ज्ञानाय० वैरा
ग्याय० ऐश्वर्याय० अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय०
ऊर्ध्वं ब्रह्मणे० अधः अनंताय० मध्ये वास्तुपुरुषाय० सं सत्त्वाय० रं
रजसे० तं तमसे० मां मायायै० विं विद्यायै० ॥ पूर्वाद्यष्टदिक्षु उड्डाणपीठे
श्वरसहितामुड्डाणपीठेश्वर्यंबापादुकांपूजयामि ॥ मातृकापीठेश्वरसहितांमातृ
कापीठेश्वर्यंबापादुकां० ॥ जालंधरपीठेश्वरसहितांजालंधरपीठेश्वर्यंबापा० ॥
कोल्हागिरिपीठेश्वरसहितांकोल्हागिरिपीठेश्वर्यंबापादु० ॥ पूर्णगिरिपीठेश्व
रसहितांपूर्णगिरिपीठेश्वर्यंबापादुकांपू० ॥ संहारगिरिपीठेश्वरसहितांसंहारगि
रिपीठेश्वर्यंबापा० ॥ कोल्हापुरपीठेश्वरसहितांकोल्हापुरपीठेश्वर्यंबापा० ॥

कामरूपपीठेश्वरसहितांकामरूपपीठेश्वर्यंबापा० ॥ पुनः पूर्वादिचतुर्दिक्षु गं गणेशायनमः क्षं क्षेत्रपालाय० पां पादुकाभ्यो० वं बटुकेभ्यो० ॥ आग्नेय्यादि विदिक्षु जं जयायैन० विं विजयायैन० जं जयंत्यै० अं अपराजितायै० ॥ तत्रैव अग्निमुखवेतालायनमः प्रेतवाहनवेतालायनमः ज्वालामुखवेताला० धूम्राक्षवेताला० कंदाय० लालाय० दलेभ्यो० केसरेभ्योनमः कर्णिकायै० अं सूर्यमंडलाय० उं सोममंडलाय० मं वह्निमंडलाय० अं आत्मने० उं अंतरात्मने० पं परमात्मने० उं ज्ञानात्मने० विं विष्णुमायायै० चें चेतनायै बुं बुद्ध्यै० निं निद्रायै० क्षुं क्षुधायै० छां छायायै० शं शक्त्यै० तृं तृष्णायै० क्षां क्षांत्यै० जां जात्यै० लं ललितायै० शां शांत्यै० श्रं श्रद्धायै० कां कांत्यै० लं लक्ष्म्यै० धृं धृत्यै० वृं वृद्ध्यै० स्मृं स्मृत्यै० दं दयायै० तुं तुष्ट्यै० पुं पुष्ट्यै० मां मातृकायै० भ्रां भ्रांत्यै० ह्रींसर्वशक्तिकमलासनाय० सर्वात्मसंसर्गयोगपीठात्मने० ॥ इतिपीठपूजा ॥ तथास्थापितमूर्तौदेवीमावा

हयेत् ॥ आगच्छवरदेदेविदैत्यदर्पनिषूदिनि ॥ पूजांगृहाणसुमुखिनमस्तेशं
करप्रिये ॥ दुर्गेदेविसमागच्छसान्निध्यमिहकल्पय ॥ बलिंपूजांगृहाणत्व
मष्टाभिः शक्तिभिः सह ॥ इतिमंत्रैपठित्वामूर्तौदेवीमावाह्यमूलमंत्रेण जयं
तीमंगलाकालीत्यनेनवाआसनपाद्यार्घ्याचमनमधुपर्कान्निवेदयेत् ॥ ततः
पंचामृतस्नानं ॥ देवीसूक्तश्रीसूक्तसरस्वतीसूक्तैर्देवीमाहात्म्योक्तैः शक्रादय
इत्यादिस्तोत्रैश्चाभिषेकः ॥ ततः पूर्वोक्तमंत्रेणवस्त्रकंचुकाभरणाष्टगंधबिल्व
पत्रनानापुष्पहरिद्राकुंकुमसिंदूरालक्तकपरिमलद्रव्याणिसमर्पयेत् ॥ अथांग
पूजा ॥ दुर्गायै० पादौ० ॥ गिरिजायै० गुल्फौ० ॥ अपर्णायै० जानुनी० ॥
हरिप्रियायै० ऊरू० ॥ पार्वत्यै० कटिं० ॥ आर्यायै० नाभिं० ॥ जग
न्मात्रे० उदरं० ॥ मंगलायै० कुक्षिं० ॥ शिवायै० हृदयं० ॥ माहेश्वर्यै०
कंठं० ॥ विश्ववंद्यायै० स्कंधौ० ॥ काल्यै० बाहू० ॥ आद्यायै० हस्तौ० ॥
वरदायै० मुखं० ॥ सुवाण्यै० नासिकां० ॥ कमलाक्ष्यै० नेत्रे० ॥ अंबिकायै०

शिरः० ॥ दैव्यै० सर्वांगं० ॥ ॥ अथाष्टोत्तरशतनामानि ॥ माहेश्वर्यैनमः महादेव्यै० जयंत्यै० सर्वमंगलायै० लज्जायै० भगवत्यै० वंद्यायै० भवान्यै० पापनाशिन्यै० चंडिकायै० कालरात्र्यै० भद्रकाल्यै० अपराजितायै० महाविद्यायै० महामेधायै० महामायायै० महाबलायै० कात्यायन्यै० जयायै० दुर्गायै० मंदारवनवासिन्यै० आर्यायै० गिरिसुतायै० धात्र्यै० महिषासुरघातिन्यै० सिद्धिदायै० बुद्धिदायै० नित्यायै० वरदायै० वरवर्णिन्यै० अंबिकायै० सुखदायै० सौम्यायै० जगन्मात्रे० शिवप्रियायै० भक्तसंतापसंहर्त्र्यै० सर्वकामप्रपूरिण्यै० जगत्कर्त्र्यै० जगद्धात्र्यै० जगत्पालनतत्परायै० अव्यक्तायै० व्यक्तरूपायै० भीमायै० त्रिपुरसुंदर्यै० अपर्णायै० ललितायै० वेद्यायै० पूर्णचंद्रनिभाननायै० चामुंडायै० चतुरायै० चंद्रायै० गुणत्रयविभाविन्यै० हेरंबजनन्यै० काल्यै० त्रिगुणायै० यशोधारिण्यै० उमायै० कलशहस्तायै० दैत्यदर्पनिषूदिन्यै० बुद्ध्यै० कांत्यै० क्षमा

 



यै० शांत्यै० पुष्ट्यै० तुष्ट्यै० धृत्यै० मत्यै० वरायुधधरायै० धीरायै० गौर्यै० शाकंभर्यै० शिवायै० अष्टसिद्धिप्रदायै० वामायै० शिववामांगवासिन्यै० धर्मदायै० धनदायै० श्रीदायै० कामदायै० मोक्षदायै० अपरायै० चित्स्वरूपायै० चिदानंदायै० जयश्रियै० जयदायिन्यै० सर्वमंगलमंगल्यायै० जगत्रयहितैषिण्यै० शर्वाण्यै० पार्वत्यै० धन्यायै० स्कंदमात्रे० अखिलेश्वर्यै० प्रपन्नार्तिहरायै० देव्यै० सुभगायै० कामरूपिण्यै० निराकारायै० साकारायै० महाकाल्यै० सुरेश्वर्यै० शर्वायै० श्रद्धायै० ध्रुवायै० कृत्यायै० मृडान्यै० भक्तवत्सलायै० सर्वशक्तिसमायुक्तायै० शरण्यायै० सर्वकामदायै० ॥ इत्यष्टोत्तरशतनामानि ॥ अथावरणपूजा ॥ देव्यादक्षिणे ऐंमहाकाल्यैविच्चेनमः ॥ वामे ह्रींमहालक्ष्म्यैविच्चेनमः ॥ पुरतः क्लीं महासरस्वत्यैविच्चेनमः ॥ वामे ह्रूंमहिषायनमः ॥ दक्षिणे क्षौंसिंहायनमः ॥ पुरतः गंगणपतयेनमः ॥ ह्रूं कालायनमः ॥ पश्चात् ह्रूंमृत्यवेनमः ॥ षड्द

लेषु ह्रैं रुद्रायनमः ॥ ह्रौं गौर्यैनमः ॥ श्रीं विष्णवेनमः ॥ श्रीं लक्ष्म्यैनमः ॥ ऐं ब्रह्मणेनमः ॥ ऐं सरस्वत्यैनमः ॥ तत्रैव ह्रां हृदयायनमः ॥ ह्रीं शिरसे स्वाहा ॥ ह्रूं शिखायैवषट् ॥ ह्रैं कवचायहुं ॥ ह्रौं नेत्रत्रयायवौषट् ॥ ह्रः अस्त्रायफट् ॥ तत्रैव गुं गुरुभ्योनमः ॥ पं परमगुरुभ्योनमः ॥ पं परमेष्ठिगुरुभ्योनमः ॥ हरयेनमः ॥ हरायनमः ॥ गणेशायनमः ॥ तत्रैव नंदजायै० रक्तदंतिकायै० शाकंभर्यै० दुर्गायै० भीमायै० भ्रामर्यै० ॥ अथाष्टदलेषु ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० नारसिंह्यै० चामुंडायै० पूर्वादिदिक्षु अं असितांगभैरवाय० रुं रुरुभैरवाय० चं चंडभैरवाय० क्रों क्रोधभैरवाय० उं उन्मत्तभैरवाय० कं कपालभैरवाय० भीं भीषणभैरवाय० सं संहारभैरवाय० ॥ पुनःपूर्वादिषु लं इंद्राय० रं अग्नये० मं यमाय० षं निर्ऋतये० वं वरुणाय० यं वायवे० सं सोमाय० हं ईशानाय० ॥ तद्बहिः पूर्वादि० वज्राय० शक्त्यै० दंडाय० खड्गाय० पाशाय०

अंकुशाय० गदायै० त्रिशूलाय० इत्यावरणपूजा ॥ ततःपूर्वोक्तमंत्रेणधूपदीप
नैवेद्यादिमंत्रपुष्पांतपूजांकृत्वा नमोदेव्यैमहादेव्यैइत्यादिमंत्रैर्नमस्कृत्य यथासं
भवं छत्रचामरगीतनृत्यवाद्यादिसमर्प्य कूष्मांडनारीकेलकदलीफलादिबलिंद
त्वा मंत्रहीनंक्रियाहीनं० आवाहनंनजानामि० ॥ अनेनपूजनेन श्रीमहाका
लीमहालक्ष्मीमहासरस्वत्यः प्रीयंतां ॥ ॥ ततः कुमारीपूजा ॥ देशकालौ
संकीर्त्य शतचंडीजपांगत्वेनकुमारीपूजांकरिष्ये इतिसंकल्प्यमूलेन षडंगंकृ
त्वामूलमंत्रमुच्चार्य ॥ मंत्राक्षरमयींदेवींमातॄणांरूपधारिणीं ॥ नवदुर्गात्मि
कांसाक्षात्कन्यामावाहयाम्यहं ॥ इतिकुमारीमावाह्ययथासंभवंपूजयेत् ॥
कुमार्यश्चप्रत्यहंशतंनवएकावायथाशक्तिवापूज्याः ॥ प्रत्यहमेकवृद्ध्यावापू
जयेत् ॥ ततोब्राह्मणसुवासिनीपूजा ॥ एवंदेवीकुमार्यादिपूजाप्रत्यहंकार्या ॥



ततःसर्वेविप्राः कृतांगन्यासाः शतंनवार्णमंत्रंजप्त्वा कवचार्गलाकीलकानि
सकृज्जप्त्वासप्तशतींजप्त्वांतेरहस्यानिनवार्णंशतंचजपेत् ॥ एकस्मिन्दिने अनेका

वृत्तौतुकवचादीनाप्रत्यावृत्तिनावृत्तिः ॥ एवमृत्विजःप्रथमदिनेएकंद्वितीये द्वेतृतीयेत्रीणिचतुर्थेचत्वारिरूपाणीत्येवंजपंकुर्युः ॥ ऋत्विजांयजमानस्यच प्रत्यहंक्षीरमात्राशनं अशक्तौहविष्याशनंवा प्रत्यहंसहस्रंशतंदशवाब्राह्मणान् भोजयेत् पंचमेह्निहोमः ॥ नवरात्रेतुनवम्यामेवहोमः ॥ केचित्तुअष्टम्या मारभ्यनवम्यांसमापयंति ॥ ॥ अथहोमः ॥ देशकालौस्मृत्वामयाब्राह्म णद्वाराकृतस्यशतचंडीजपस्यतत्संपूर्णतासिद्ध्यर्थंजपदशांशेन तिलादिमिश्रपाय सद्रव्येण होमंकरिष्ये इतिसंकल्प्य ॥ अत्रकेचित्पुण्याहवाचनमपिकुर्वंति ॥ तथापूर्वोक्तकलशस्थापनंदेवतास्थापनंपूजनंचात्रैवकुर्वंति ॥ ततःसनवग्रहशत चंडीजपदशांशहोमंकर्तुंस्थंडिलादिकरिष्ये इतिसंकल्प्यस्थंडिलमुपलिप्योल्लि ख्य तत्र ( शत ) मंगलनामानमग्निंप्रतिष्ठाप्यसमिध्यध्यायेत् ॥ ततःप्राग कृतंचेदिदानीमीशान्यांदिशिनवग्रहस्थापनंकृत्वा तत्पूर्वतःकलशं स्थाप येत् ॥ ततोग्निसमीपमागत्यान्वाधानंकुर्यात् ॥ समिद्द्वयमादाय क्रियमाणेशत

चंडिजपांगहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्या दिच्चक्षुषीआज्येनेत्यंतमुक्त्वा ॥ आदित्यादिनवग्रहान् प्रतिद्रव्यमष्टाविंशति अष्टवासंख्याकाभिः समित्तिलाज्याहुतिभिः अधिदेवताः प्रत्यधिदेवताश्च चतुः संख्याकाभिः तैरेवद्रव्यैः विनायकाद्यादेवता इंद्राद्यष्टौलोकपालांश्चद्वाभ्यां द्वाभ्यांसमित्तिलाज्याहुतिभ्यांयक्ष्ये ॥ महाकाली–महालक्ष्मी–महासरस्वतीः मूलमंत्रेणशतवारंसप्तशतीमंत्रैः जपदशांशसंख्ययापायसतिलपलाशपुष्पसर्षप पूगीफललाजादूर्वांकुरयवबिल्वफलरक्तचंदनगुग्गुलद्रव्यैर्यथालाभद्रव्यैर्वा तिल मिश्रितपायसेनवापुनर्मूलमंत्रेणशतवारंतैरेवद्रव्यैः आधारशक्त्यादिपीठदेवताः महाकाल्याद्यावरणदेवताश्च एकैकाहुत्यापायसाज्येनयक्ष्ये ॥ शेषेणस्विष्ट कृतमित्याद्याज्यभागांतंकृत्वा ॥ यजमानःइदंहवनीयद्रव्यंयथादैवतमस्तु नम मेतित्यजेत् ॥ नवग्रहादिभ्यःसमित्तिलाज्यानिहुत्वाउक्तद्रव्याणिमूलमंत्रेण शतवारंहुत्वा सप्तशतीमंत्रैर्जपदशांशेनहुत्वा पुनर्मूलमंत्रेणशतवारंजुहु

यात् ॥ मूलमंत्रोनवार्णमंत्रः ॥ नवार्णमंत्रस्यकेवलाज्येनैववाहोमः ॥ अत्राध्यायसमाप्तौउवाचस्थलेचपत्रपुष्पफलैर्होमः ॥ एवं प्रधानहोमंकृत्वापीठ देवताभ्योनामभिराज्यंपायसंचजुहुयात् ॥ आधारशक्त्यै० मूलप्रकृत्यै० कालाग्निरुद्राय० महामंडूकाय० कूर्माय० वराहाय० अनंताय० भूम्यै० अमृतार्णवाय० रत्नद्वीपाय० हेमगिरये० नंदनोद्यानाय० मणिभूम्यै० रत्नमंडपाय० कल्पतरवे० रत्नसिंहासनाय० धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ब्रह्मणे० अनंताय० वास्तुपुरुषाय० सं सत्त्वाय० रं रजसे० तं तमसे० मां मायायै० विं विद्यायै० उड्डाणपीठेश्वरसहितोड्डाणपीठेश्वर्यंबायै० मातृकापीठेश्वरसहितमातृकापीठेश्वर्यंबायै० जालंधरपीठेश्वरसहितजालंधरपीठेश्वर्यंबायै कोल्हागिरिपीठेश्वरसहितकोल्हागिरिपीठेश्वर्यंबायै० पूर्णगिरिपीठेश्वरसहितपूर्णगिरिपीठेश्वर्यंबायै० संहारगिरिपीठेश्वरसहितसं

 हारगिरिपीठेश्वर्यंबायै० कोल्हापुरपीठेश्वरसहितकोल्हापुरपीठेश्वर्यंबायै० 
कामरूपपीठेश्वरसहितकामरूपपीठेश्वर्यंबायै० गं गणेशाय० क्षं क्षेत्रपाला
 य० पां पादुकाभ्यो० बं बटुकेभ्यो० जं जयायै० विं विजयायै० जं जयं
त्यै० अं अपराजितायै० अग्निमुखवेतालाय० प्रेतवाहनवेतालाय० वाला
मुखवेतालाय० धूम्राक्षवेतालाय० कंदाय० नालाय० दलेभ्यो० केसरे
भ्यो० कर्णिकायै० अं सूर्यमंडलाय० उं सोममंडलाय० मं वह्निमंडलाय०
अं आत्मने० उं अंतरात्मने० पं० परमात्मने० उं ज्ञानात्मने० विं विष्णुमा
यायै० चें चेतनायै० बुं बुद्ध्यै० निं निद्रायै० क्षुं क्षुधायै० छां छायायै० शं
शक्त्यै० तृं तृष्णायै० क्षां क्षांत्यै० जां जात्यै० लं ललितायै० शां शांत्यै० श्रं
श्रद्धायै० कां कांत्यै० लं लक्ष्म्यै० धृं धृत्यै० वृं वृद्ध्यै० स्मृं स्मृत्यै० दं दया 
यै० तुं तुष्ट्यै० पुं पुष्ट्यै० मां मातृकायै० भ्रां भ्रांत्यै० ह्रीं सर्वशक्तिकमलास
नाय० सर्वात्मसंसर्गयोगपीठात्मने० इतिपीठदेवताहोमः ॥ अथावरणदेवताः ॥

ऐं महाकाल्यैविच्चे ह्रीं महालक्ष्म्यैविच्चे क्लीं महासरस्वत्यैविच्चे ह्रूं महिषाय० क्षं सिंहाय० गं गणपतये० ह्रूं कालाय० ह्रूं मृत्यवे० ह्रैं रुद्राय० ह्रौं गौर्यै० श्रीं विष्णवे० श्रीं लक्ष्म्यै० ऐं ब्रह्मणे० ऐं सरस्वत्यै० ह्रां हृदयाय० ह्रीं शिरसे० ह्रूं शिखायै० ह्रैं कवचायहुं ह्रौं नेत्रत्रयायवौषट्० ह्रः अस्त्रा यफट्० गुं गुरुभ्यो० पं परमगुरुभ्यो० पं परमेष्ठिगुरुभ्यो० हरये० हरा य० गणेशाय० नंदजायै० रक्तदंतिकायै० शाकंभर्यै० दुर्गायै० भीमायै० भ्रामर्यै० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० नारसिंह्यै० चामुंडायै० अं असितांगभैरवाय० रुं रुरुभैरवाय० चं चंड भैरवाय० क्रौं क्रोधभैरवाय० उं उन्मत्तभैरवाय० कं कपालभैरवाय० भीं भीषणभैरवाय० सं संहारभैरवाय० लं इंद्राय० रं अग्नये० मं यमाय० क्षं निर्ऋतये० वं वरुणाय० यं वायवे० सं सोमाय० हं ईशानाय० वज्रा य० शक्त्यै० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशू

लाय० ॥ एवंहोमंकृत्वा स्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वा इंद्रादिनवग्रहक्षेत्रपालादिभ्यो माषभक्तबलींस्तत्तन्मंत्रैर्दद्यात् ॥ तत्रमंत्राः ॥ इंद्रंवो० इंद्रःसुरपतिश्चैववज्रहस्तोमहाबलः ॥ शतयागाधिपोदेवस्तस्मैनित्यंनमोनमः ॥ इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायइमंमाषभक्तबलिं समर्पयामि भोइंद्रइमंबलिंभक्षदिशंरक्षममयजमानस्यायुःकर्ताशांतिकर्तापुष्टिकर्ता तुष्टिकर्ता कल्याणकर्ता वरदोभव ॥ अनेनबलिदानेनइंद्रःप्रीयतां ॥ १ ॥ अग्निंदूतं० आग्नेयःपुरुषोरक्तःसर्वदेवमयोव्ययः ॥ धूमकेतुरनाधृष्यस्तस्मैनित्यंनमोनमः ॥ अग्नये० इत्यादि० ॥२॥ यमायसोमं० यमश्चोत्पलपत्राक्षः किरीटीदंडधृक्सदा ॥ लोकसाक्षीविशुद्धात्मातस्मैनित्यंनमोनमः ॥ यमायसांगायेत्यादि० ॥ ३ ॥ मोषुणःपरापरा० निर्ऋतिस्तुपुमान्कृष्णःसर्वरक्षोधिपोमहान् ॥ खड्गहस्तोमहासत्त्वस्तस्मैनित्यं० निर्ऋतयेसांगायेत्यादि० ॥ ४ ॥ तत्त्वायामि० वरुणःसर्वलोकेषुपुरुषोनिम्नगाधिपः ॥ पाशहस्तो

त्वा उत्तिष्ठब्रह्मण० अभ्यार० उत्तिष्ठदेविचंडेशिशुभांपूजांप्रगृह्य च ॥ कुरुष्वममकल्याणमष्टाभिःशक्तिभिःसह ॥ इतिमंत्रैर्विसृज्याचार्यायदत्वामंत्रंपठेत् ॥ त्रैलोक्यमातर्देवित्वंसर्वभूतदयान्विते ॥ दानेनानेनसंतुष्टासुप्रीतावरदाभव ॥ ततःयस्यस्मृत्या० प्रमादात्कुर्वतांकर्म० इत्यादिजपित्वाकर्मेश्वरार्पणंकृत्वा सुहृद्युतोभुंजीत ॥ इदमेवपूजाहोमबल्यादिविधानंनवरात्रेपिज्ञेयं ॥ तत्र विशेषस्तुदशम्यांप्रातर्देवीविसर्जनं ॥ अन्यच्चमहानिबंधेभ्योवगंतव्यं ॥ इतिसंक्षेपेणनवचंडीशतचंडीसहस्रचंडीप्रयोगः ॥ ॥ ॥

इदं पुस्तकं पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संशोधितं तच्च मुंबय्यां
पांडुरंग जावजी इत्येतैः स्वीये निर्णयसागराख्येऽकनयंत्रालये मुद्रयित्वा प्रकाशितम् ।

शाकः १८५७ सन १९३५.

पब्लिशर–पांडुरंग जावजी.
प्रिंटर–रामचंद्र येसू शेडगे.
निर्णयसागर प्रेस, नं० २६–२८
कोलभाट लेन, मुंबई.

